श्रीमद्-बुद्धिसागरसूरीश्वरजी-ग्रन्थमालाग्रन्थाङ्क ११०

ॐ अर्हम्

शास्त्रविशारदजैनाचार्ययोगनिष्ठाऽऽध्यात्मज्ञानदिवाकरश्रीमद्-बुद्धिसागरसूरीश्वरविरचिता—

# प्रेमगीता.

संशोधयिता प्रसिद्धवक्ताजैनाचार्यश्रीमद्-अजितसागरसूरिः

प्रकाशकं चाऽध्यात्मज्ञानप्रसारकमण्डलम्

ह. वकीलमोहनलालहीमचंद—पादरा. ( गुजरात )

वि. १९८४ — वीर सं. २४५४

बुद्धि सं. ४ — प्रतयः ५०० — ई. सं. १९२८

भावनगर—आनंद प्रीन्टींग प्रेसमां शा गुलाबचंद लल्लुभाइए छाप्युं.

मूल्यं रु. ०-६-०

# प्रेमगीतामाहात्म्यम्—

प्रेमगीता विधातव्या, बुद्धिसाध्या मनीषिभिः ।
एषैव मोक्षदा पुंसां, किमन्यैः शास्त्रविस्तरैः ॥ १ ॥

एकस्याः प्रेमगीतायाः, पाठेन दुरितक्षयः ।
शास्त्रान्तरप्रयासेन, ध्रुवं बुद्धिमतां नृणाम् ॥ २ ॥

प्रेमगीतामृगेन्द्रोऽयं, यावन्नायाति सन्मुखम् ।
तावद्गर्जन्ति शास्त्राणि, कुञ्जरोपमितानि वै ॥ ३ ॥

प्रेमगीताऽऽत्मतत्त्वस्य, सारभूताऽस्ति भूतले ।
कलौ संसृतिपाथोधौ, तारिणीयं मनीषिणाम् ॥ ४ ॥

प्रेमगीताप्रचारोऽयं, सूरीशेन प्रवर्चितः ।
परंपरागतो भावी, महोपकृतिकारकः ॥ ५ ॥

# निवेदन.

सद्गत गुरुवर्य श्रीमद् बुद्धिसागरसूरीश्वरजी महाराजना अप्रगट साहित्य पैकीनो आ ग्रन्थ-प्रेमगीता ( मूळ संस्कृत ) छे. आ ग्रन्थनो विषय गहन होवाथी तेनुं भाषान्तर अथवा अनुवाद थवानी जरूर छे. पण तेम करतां वधारे वखत लागे तेम होवाथी गुरुश्रीना पट्टधर शिष्य प्रसिद्धवक्ता श्रीमद्-अजितसागरसूरीश्वरजीनी प्रेरणानुसार हाल मूल रूपेज प्रसिद्ध करवानुं उचित धार्युं छे. आ ग्रन्थनुं गुजराती भाषामां, समश्लोकी भाषान्तर सारा विद्वान् पासे करावी प्रसिद्ध करवा मण्डलने उमेद छे. आ ग्रन्थनो विषय अति गम्भीर होवाथी कर्त्ताना आशय तथा सापेक्षता लक्षमां राखी वांचवा विनंती छे. आ ग्रन्थ साथे जोडवा सद्गत गुरुश्रीनुं संस्कृत टुंक जीवन तथा ग्रन्थनी प्रस्तावना लखी आपवा माटे श्रीमान् अजितसागरसूरीश्वरजी महाराजनो अंतःकरणपूर्वक आभार मानवामां आवे छे.

सं १९८४ द्वितीयश्रावणसुदि ९ सोमवार.

शुद्धि सं. ४ पादरा.
ता २०-८-२८ } श्रीअध्यात्मज्ञानप्रसारकमंडल.

तर्हि स तु द्वादशगुणस्थानपर्यन्तं तिष्ठति, केवलज्ञानस्यप्रादुर्भावे मनोऽपि लीयते, ततस्तत्र परहितकांक्षाप्रेम-करुणाप्रभृतयोभावा विनश्यन्ति, तथैव चतुर्थगुणस्थानकात् विशुद्धप्रेम प्राप्यते, आत्मविशुद्धप्रेमा त्वपेक्षया त्रयोदशगुणस्थानेऽपि संभवेत् । प्रेमा द्विविधः शुद्धोऽशुद्धश्च, तत्र शुद्धोमोक्षाऽभिलाषुकैः सर्वोपकारक्षमः मैत्र्यादिगुणवर्धकः सर्वदा सेव्यः, अशुद्धश्च विषयभोगजीवनोधर्मकर्मनिहन्ता दुर्गतिदायकः सर्वदाहेयः तथा च—

" अशुभभावनाऽशुद्ध-प्रेमता निरयप्रदा । शुभभावः सदा शुद्ध-प्रेमाऽस्ति मोक्षदायकः ॥ १ ॥
शुद्धप्रेमा ततः कार्यः, सर्वत्र सर्वदेहिषु । नहि प्रेम्णा समं लोके, विद्यते जिनभाषितम् ॥ २ ॥
प्रशस्तश्चाऽप्रशस्तश्च, प्रेमाऽस्ति द्विविधो जने । संघादिधर्मरक्षायां, प्रशस्तप्रेम कीर्त्यते ॥ ३ ॥
स्वर्गाऽपवर्गदा नृणां, प्रशस्तप्रेमभावना । अप्रशस्ता तु सा स्वार्थ-सिद्धिकामादिहेतुका ॥ ४ ॥
अप्रशस्तः सदा त्याज्यः, प्रशस्तो ग्राह्य एव च । प्रेमाऽऽद्योऽशुद्धिदोनित्य-मन्तिमस्तु विशुद्धिदः ॥ ५ ॥
विशुद्धप्रेमिणो सर्वे, जीवाः स्वात्मसमाः स्थिताः । अशुद्धप्रेमिणोजीवान्, पश्यन्ति भेदबुद्धितः ॥ ६ ॥
प्रेमाऽस्ति जीवनाधारः, प्रेमसारो हि भूतले । सत्यव्यवहार एवाऽसौ, प्रेमाऽस्ति वर्त्मरक्षकः ॥ ७ ॥
सैव कष्टाऽब्धिसेतुश्च, हृदयाऽऽरामवारिजम् । धर्मः सनातनः प्रेम, प्रेमाऽस्ति सत्यपूजनम् ॥ ८ ॥
सत्कर्मप्रेमतो नान्यत्, त्रिषु लोकेषु विद्यते । परमानन्दता प्रेम्णि, तस्मात्तृष्णा निवर्तते ॥ ९ ॥
स्वेच्छापूर्त्तिः स एवाऽस्ति, हृद्याशाहेतुकः स च । निःसीमाऽनन्तता प्रेम्णि, सर्वतो व्यापकोऽस्त्यसौ ॥ १० ॥
अनुमातुं न तच्छक्यं, केनाऽपि क्षितिमण्डले । दम्पत्योः स्थिरताभेति, सन्नीभूय स सर्वतः ॥ ११ ॥

वंशजेषु सदा प्रेमा, दृश्यते विस्तृतिं गतः । विभज्यते न यत्प्रेम, भ्रातृपुत्रादिभिः कदा ॥ १२ ॥
अनुरागविधाने हि, प्रेमी श्राम्यति नो जनः । क्षणतः प्रेम निर्माति, कुटीं दीव्यनिकेतनम् ॥ १३ ॥
प्रेमतुल्यंबलंनान्य-त्सर्वसिद्धिविधायकम् । मनःशुद्धिविधानेन, प्रेमचासौ भवेद्ध्रुवम् ॥ १४ ॥
रोचते न मनुष्येभ्यः, शुद्धिहीनं निकेतनम् । दिव्यवैभवसम्पन्न-मपि शुद्धिः प्रशस्यते ॥ १५ ॥
आन्तरिकतमोव्रातः, प्रेमतः चीयते क्षणात् । कूटत्ववार्दलौघश्च, प्रेमवातेन शीर्यते ॥ १६ ॥
प्रेमभावो यदा विश्वे, विश्वस्मिन् विस्तृतिं व्रजेत् । विगताशामलः प्रेमी, तदा याति परं पदम् ॥ १७ ॥
तेनैव सकला सृष्टिः, सद्यः प्रेममयी भवेत् । द्वैतभावमयी दृष्टि-र्मनुजानां विनश्यति ॥ १८ ॥
चक्षुषा दृश्यते नैव, प्रेमरम्यत्वमङ्गिभिः । अद्भुता शक्तिरस्याऽस्ति, मनोभेदः प्रलीयते ॥ १९ ॥
क्रयविक्रयतो नैव, लभ्यते प्रेम कर्हिचित् । सुलभः प्रेमसद्भावो-देहिनां प्रेमतः खलु ॥ २० ॥
प्रेमतो महतां मानः, पूज्यानां भक्तिरन्वहम् । इष्टदेवशुभध्यानं, मनःसौहार्दमाप्यते ॥ २१ ॥
देशभक्तिरुचिः प्रेम्णो-द्विपदन्यायनिर्वृतिः । अन्येऽपि शुभयोगाश्च, भवन्ति प्रेमभावतः ॥ २२ ॥
प्रेममार्गोऽतिरम्योऽस्ति, तदन्यो दुरतिक्रमः । भयङ्कराणि विघ्नानि, वर्तन्ते यस्य सान्निधौ ॥ २३ ॥
स्वार्थदस्युः स्थितस्तत्र, विरहःपृथुवेदना । अस्थिरत्वं च तत्रैव, लोकलज्जाऽपि देहिनाम् ॥ २४ ॥
सुलभं कथनं प्रेम्ण-स्तत्प्रवृत्तिस्तु दुष्करा । मनश्चञ्चलताग्रस्तं, प्रेमवृत्तिपराङ्मुखम् ॥ २५ ॥
कष्टेन प्रेमसद्भावः, सज्जनानां समुद्भवेत् । प्रेमता जायते प्रायः, समशुद्धिविधायिनाम् ॥ २६ ॥

विशुद्धप्रेम क तिष्ठतीति ग्रन्थकर्ता स्वयमाह—

यत्रात्मा दृश्यते शुद्धः, सच्चिदानन्दलक्षणः । आसक्तिर्यत्र नैवाऽस्ति, शुद्धप्रेमाऽस्ति तत्र हि ॥ २ ॥
सर्वजातीयदेहेषु, जीवा देवाः स्वभावतः । तत्साद्धमात्मवत् प्रेम, पूर्णानन्दप्रकाशकम् ॥ ३ ॥
जिनेन्द्राः सर्वजीवाः स्यु–स्तत्रात्मैक्येन वर्त्तनम् । परप्रेम विशोद्धव्यं, शुद्धब्रह्मरसात्मकम् ॥ ४ ॥

विना प्रेम्णा दोषग्रस्ते कलियुगे धर्मसिद्धिर्नजायते—

कलौ प्रेममयो धर्मः, सर्वत्र मुक्तिदायकः । रागेण संयमो शोध्य–श्चारित्रिणामपि ध्रुवम् ॥ ५ ॥
प्रेम्णा धर्मस्य संवृद्धिः, प्रेम्णैव देवपूजनम् । प्रेम्णैव सद्गुरोः पूजा, प्रेम्णा विश्वं रसात्मकम् ॥ ६ ॥
जगच्छून्यं विना प्रेम्णा, नीरसं बहिरन्तरम् । लोकानां सर्वदा प्रेम, स्वान्तरबाह्यजीवनम् ॥ ७ ॥
बाह्यनैमित्तिको रागो–वैषयिको विनश्वरः । आत्मज्ञानविहीनानां, भवत्येव जडात्मनाम् ॥ ८ ॥

येन सर्वात्मभिः साकमैक्यमनुभूयेत, तद्महाब्रह्मरसाऽनुभवदायकं प्रेमैव विद्यते, । विशुद्धप्रेमतो देहसद्म-
स्थितानां सर्वजातीयजीवानां दर्शनमात्मवत्सदैव भवेत्, विशुद्धप्रेमभावतः सर्वदोषाः क्षयं यान्ति, सर्वव्यापक-
प्रेमतो निन्दादिदोषा न समुद्भवन्ति, प्रशस्यं प्रेम मनीषिणां श्रेयसे मोक्षाय च भवति । अप्रशस्येन रागेण
भवाटव्यां दुःखपरम्परा प्रादुर्भवति, अतः सर्वदुःखविनाशाय शुद्धप्रेम प्रकटीकुरु, प्रेमतः पुंसां सर्वकर्तव्यसामर्थ्यं
प्रादुर्भवति. यज्ञस्वरूपेण विशुद्धप्रेम प्रतिपादितं सूरीन्द्रेण—

सर्वयज्ञस्वरूपोऽस्ति, प्रेमयज्ञः सतां मतः । प्रेमयज्ञनिमग्नाना-मन्ययज्ञो न विद्यते ॥ ३३२ ॥

३३३-३३४-३३५-श्लोकैर्ज्ञातव्यो विशेषश्च । तथैव प्रेम्णः सप्तैव भूमिकाः प्रतिपादिताः, ताश्चाधिकारपरत्वेन गुर्वाज्ञातः सेव्याः. तत्स्वरूपं मूलग्रन्थोक्तैः ३४३-४०६-श्लोकैर्ज्ञातव्यम् ॥

ज्ञानाराधनमपि विशुद्धप्रेम्णैव संपद्यते, सम्यक्त्वं च तस्मादेव प्राप्यते, सम्यक्त्वाच्चारित्रं चारित्रादनन्तसुखमयो मोक्षः. किमपि धर्मकार्यं विना प्रेम्णा मानवाः साधयितुं न शक्नुवन्ति, यतः—

प्रेमाधीनं जगत्सर्वं, क्रियमाणे प्रवर्त्तते। प्रेमिणां मानसं शुद्धं, पूज्यन्ते प्रेमिणः सदा ॥ १ ॥ अनन्तेष्वात्मिकगुणेषु विशुद्धप्रेमगुणो मुख्यतां वहति, अन्यगुणेष्वनुरागः प्रेमतः संजायते, गुणेष्वासक्तिरपि प्रेमैव निगद्यते, स च प्रेमा-रागिणि योजितः सोऽपि, रागतां वर्धयेत्खलु । ततः संसारतावृद्धि र्जायते दुःखदायिनी ॥ १ ॥ वीतरागे कृतः प्रेमा, भवपाथोधितारकः । अपुनर्जन्मदाताऽसौ, प्रशस्तः परिकीर्त्तितः ॥ २ ॥ अनन्तसुखात्मके विशुद्धाऽऽत्मनि प्रशस्तप्रेमकरणेनऽप्रशस्तप्रेम्णो विनाशः, तस्मात्सर्वजीवेषु प्रेमवता भाव्यम् । अन्यथा दुरन्तदुःखमयादपारसंसाराज्जीवानामनुद्धृतिरेव, तथैव ग्रन्थकर्त्राऽपि निवेदितम् । सर्वजीवोपरि प्रेमा, यस्य जातो न वस्तुतः। तस्योद्धारो भवेन्नैव, विना प्रेम न पात्रता ॥ १०८ ॥ तथैवाऽहिंसाधर्मोऽपि प्रेम्णैव सिद्ध्यति, ' अहिंसा प्रेमयोगेण, भवत्येव न संशयः । गुणाधारमहाप्रेम, सर्वस्वार्पणकारकम् । १०९ ॥ प्रेमविहीना मूढा अनन्तसंसारवेदनामनुभवन्ति-'' संसारिणां विना प्रेम, भवेद्दुःखं पदेपदे । सर्वसंबन्धशून्यत्वं, शून्यत्वं चा-

त्मनस्तथा ॥ १११ ॥ शुद्धप्रेमैव जैनधर्मस्तत्स्वरूपं च सूरीश्वरेण विशदीकृतम् । "शुद्धप्रेमप्रभुः साक्षा-दन्तर्यामी प्रवर्त्तते । भक्तानां हृदिसंवेद्यो-जैनधर्मः स उच्यते ॥ ४३१ ॥ बाह्यानां ममता यावत्, तावद् वीरे न रागता । यावन्मृत्युभयं चित्ते, तावत्सत्प्रेम नोप्रभौ ॥ ४३२ ॥ अतो मृत्युभयं विजित्य श्रीवीरप्रभौ प्रेमैकतानता विधेया. यतः—कलौ सरागधर्मोऽस्ति, त्यागिनां गृहिणां तथा । न्याय्यरागादिधर्मेण, भक्तानां मुक्तिमार्गता ॥ ४३४ ॥ वीतरागो भवेन्नैव, कलौ कोऽपि स्वभावतः । अतो देवादिसेवायां, शुभरागादयः स्मृताः ॥ ४३५ ॥ सत्यप्रेमिणां संसारवर्द्धका ये भावास्तेऽप्यपेक्षया मोक्षदायिनो भवन्ति ( ज्ञानिनां भोगा अपि निर्जराहेतुः ) भवस्य हेतवो ये ये, ते ते मोक्षस्य हेतवः । भवन्त्यपेक्षया सत्य-प्रेमयुक्तमनीषिणाम् ॥ ४५५ ॥

शुद्धपरमात्मध्यानेन शुद्धात्मप्रेमलीनस्य देहिनः समाधिः सततं सिद्ध्यति, सामान्यतोमोहजनकं यत्प्रेम तच्चुदशमगुणस्थानाऽवधि संभवति. अस्मिन्ग्रन्थे प्रेमशब्देन प्रायो विशुद्धप्रेमा ( आत्मरमणतारूपः ) ग्रन्थकर्त्रा निर्दिष्टः, श्रीमदाचार्यवर्येण विद्वन्मान्येन शास्त्रविशारदयोगनिष्ठाऽऽध्यात्मज्ञानदिवाकरेण श्रीमद् बुद्धिसागरसूरीश्वरेण विरचिता ग्रन्थमाला ( १०८ ) विश्वविकाशमातनोति, तथैवेयं प्रेमगीता तद्विरचिता जगज्जीवोपकारकारिणी बुद्धिमतां करकमलस्थिता विलासमेष्यति, अन्यान्यपि जैनगीता, गुरुगीता, कृष्णगीता, अध्यात्मगीतादिप्रवचनानि, एषां सूरीश्वराणां मुखकमलात् प्रवर्त्तितानि भव्यात्मनां मनांसि रञ्जयन्ति, अस्याः प्रेमगीताया गौरवन्तु-अध्यात्मरसरसिकाः स्वयं वाचनेन विज्ञास्यन्ति, श्रीमदाचार्य-वर्यविरचिताग्रन्थमालाप्रसारयितृ स्वेनैव संस्थापितमध्यात्मज्ञानप्रसारकमण्डलं गुरुभक्त्या-अध्यात्मज्ञान-

रसिकानामतीवोपकारं कुरुते, अतस्तन्मण्डलं धन्यवादमर्हति, अस्य ग्रन्थविशोधने दत्तदृष्टिरनेकग्रन्थरचयिता प्रसिद्धवक्ता श्रीमदाचार्य-अजितसागरसूरीश्वरः,

विशोधकस्याऽक्षरनियोजकानां चाऽत्र मुद्रणे यत्र काऽपिस्खलना दृष्टिपथं पतति चेद्विशोध्य वाचनीयं सूचयितव्यं च धीधनैः,

यतः—गच्छतः स्खलना काऽपि, भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र, समादधति सज्जनाः ॥ १ ॥

इति प्रार्थयते—

प्रसिद्धवक्ताश्रीमद्-अजितसागरसूरीश्वरचरणसरोजरोलम्बायमानः—

मुनिहेमेन्द्रसागरः

मु० माणसा ( महीकांठा )
वीर सं. २४५४ श्रावणशुक्ल-
वि. सं. १९८४ द्वितीयायां
बुद्धि. सं. ४ भृगुवासरे

ॐ शान्तिः ३



# शुद्धिपत्रकम्.

| पृष्ठम्, | पङ्क्तिः | | अशुद्धिः | शुद्धिः |
|---|---|---|---|---|
| १५ | ११ | | सध्यमैव | सत्येमैव |
| २५ | ७ | | शाम्पति | शाम्यन्ति |
| २८ | ,, | | देहाध्यासस | देहाध्यास |
| ३३ | ११ | | द्रश्यते | दृश्यते |
| ३४ | ,, | | भूमिकः | भूमिकाः |
| ३५ | १२ | | क्रिञ्चित् | किञ्चित् |
| ३६— | ६ | | जनैर्द्रश्यो | जनैर्दृश्यो |
| ४० | १० | | सञायः | सञापः— |
| ७ | ९ | जीवनचरित्रे | पन्न्यापदं, | पन्न्यासपदं |



शास्त्रविशारदजैनाचार्यसद्गुरुश्रीमद् बुद्धिसागरसूरीश्वरेभ्यो नमः

## अथग्रन्थकर्तुःसंक्षिप्तजीवनवृत्तान्तम् ॥

पवित्रीकृतभूमीनां, श्रीमतामर्हतां मुदा । नत्वा श्रेणिं प्रवक्ष्येहं, चरित्रं स्वगुरोः शुभम् ॥ १ ॥
समस्ति जम्बूद्वीपेऽस्मिन्, भरतक्षेत्रमूर्जितम् । धनधान्यादिसंपद्भि-र्महारत्ननिधानकम् ॥ २ ॥
तत्र देशशिरोरत्नं, नानातीर्थपवित्रितः । राजते गूर्जरो देशो-धर्माचार्यैर्विभूषितः ॥ ३ ॥
विद्यापुराऽ(विजापुर)भिधं विद्या-मन्दिरेण विभूषितम् । भ्राजते पत्तनं भूरि-समृद्धेभ्यगणैः श्रितम् ॥ ४ ॥
विरेजुर्यत्र दिव्यानि, मन्दिराण्यर्हतां पुरे । गगनाङ्गणचुम्बीनि, यशांसीव महात्मनाम् ॥ ५ ॥
अस्ति कूर्मान्वयस्तत्र, कृषिकर्मविशारदः । दयादिगुणराशीना-मालयो धर्मभावनः ॥ ६ ॥
शिवदासः शिवश्रीभाक्, सुधीर्धर्मपरायणः । तत्राऽजनिष्ट भूयिष्ठ-जनव्रातप्रियङ्करः ॥ ७ ॥
भार्या तस्याऽभवच्छुद्ध-चारित्राऽम्बाभिधानका । सती मतल्लिका भव्या, रुचिराननपङ्कजा ॥ ८ ॥
नमोगुणाङ्कवसुधा ( १९३० ) मिते वैक्रमवत्सरे । माघकृष्णचतुर्दश्यां निशीथे भानुवासरे ॥ ९ ॥
तयोर्भक्तिमतोर्गेहे, जज्ञे सूनुरिवांशुमान् । यदीयतेजसाऽरिष्टं, दिदीपे दीप्तिमत्तरम् ॥ १० ॥ युग्मम् ॥

पितृभ्यां मोदमानाभ्यां, बेचरेत्यभिधाऽकृत । तस्याऽर्भकस्य सद्बुद्धे-र्निधानस्येव भाविनः ॥ ११ ॥
शशाङ्ककलया सार्द्धं, ववृधे प्रतिवासरम् । कुमारः सुधया सिञ्चन्, कौटुम्बिकविलोचने ॥ १२ ॥
कौमारभावमापन्नः, कलाचार्यसमीपगः । निजबुद्धिप्रभावेण, क्रमशः शास्त्रमादधत् ॥ १३ ॥
विद्याविनयसंपन्नं, धर्मबुद्धिं विलोक्य तम् । मुमुदे मानसे स्वीये, कलाचार्यो विशेषतः ॥ १४ ॥
छात्रेष्वन्येषु बहुषु, सोऽपि तस्मिन्मनीषिणि । सफलं स्वश्रमं मेने, पात्रदत्तं हि सत्फलम् ॥ १५ ॥
अथ श्रेष्ठिवरस्तस्मि-न्नगरे द्वादशव्रती । मंच्छारामम[1]हेभ्यस्य, नभ्भुनामा सुतोऽभवत् ॥ १६ ॥
आजन्मशुद्धचरितः, स्वकर्मनिरतोऽनिशम् । मुनिशुश्रूषणे दक्षो-धर्मकार्यधुरन्धरः ॥ १७ ॥
तीर्थेषु दत्तलक्षो यो-धर्मतत्त्वविदांवरः । सर्वत्र ख्यातसत्कीर्तिः, परोपकृतिमान् बभौ ॥ १८ ॥ युग्मम् ॥
एकदा श्रेष्ठिना तेन, विद्याशालामुपागतः । शिवदाससुतो दृष्टो-जैनधर्मरुचिं दधत् ॥ १९ ॥
जैनधर्मोन्नतिकर्त्ता, बालोऽयमिति बुद्धिमान् । अवालो सुधिया ज्ञात्वा, गृहं निन्ये निजं स तु ॥ २० ॥
स्थित्वा तत्रैव तत्त्वानि, जैनानि ज्ञातवान्सुधीः । गुरूणां संनिधानेन, द्विचरः शुद्धमानसः ॥ २१ ॥
मे[2]शांनाख्यपुरे वर्ये, विद्याधिगमहेतवे । जग्मिवान्स ततो विद्वान्, प्राज्ञः कः स्वगृहे वसेत् ॥ २२ ॥
श्रीयशोविजयाभिख्य-पाठशालामधिश्रयन्, स्वल्पकालेन सद्ग्रन्थान्, पपाठ बुद्धिमत्तरः ॥ २३ ॥
तत्रैव पाठको भूत्वा, महेभ्यैः प्रार्थितः स्वयम् । विनेयान् शिक्षयामास, जैनतत्त्वानि तत्त्वतः ॥ २४ ॥

१. करिष्यति. २ महेशाणा.

तदागमन्मुनिश्रेष्ठो-विवस्वानिव तेजसा । शिष्यवृन्दसमायुक्तो-गुरुः श्रीरविसागरः ॥ २५ ॥
गुरूणामागमं श्रुत्वा, सज्जीभूय समुत्सुकः । पुरं प्रावेशयत्संघः, पताकाभिरलङ्कृतम् ॥ २६ ॥
उपाश्रयं समागत्य, गुरुणा देशनाक्षणम् । विज्ञाय विदधे धर्म-देशना पापनाशिनी ॥ २७ ॥

भव्या ! भवे मानवजन्म दुर्लभं, विज्ञाय धर्मं जिनपुङ्गवोदितम् ।
विधत्त येनाशु दयाविकस्वरं, स्वर्गाऽपवर्गस्य निदानमुत्तमम् ॥ २८ ॥
पुनः स धर्मो द्विविधः प्ररूपितो-जिनोत्तमैः श्राद्धमुनीन्द्रभेदतः ।
आद्यस्तयोर्देशविरत्यभिख्यया, तथान्तिमः सर्वतएव कीर्त्तितः ॥ २९ ॥
निमज्जतां संसृतिवारिधौ महा-मोहग्रहव्याप्तजले तरण्डकम् ।
चारित्रधर्मं शिवसौधदीपकं, गृह्णीत सद्यः सुखसंपदालयम् ॥ ३० ॥
दयाविशालः खलु जैनधर्मः, सर्वेषु धर्मेषु दया प्रधाना ।
दयाविहीनः स तु निष्फलोऽस्ति, तस्माद्विधेया सुतरां दया सा ॥ ३१ ॥

निशम्यैतां सुधासिक्तां, गिरं सद्गुरुणोदिताम् । केचिच्छ्राद्धव्रतं केचि-त्सम्यक्त्वं जगृहुर्मुदा ॥ ३२ ॥
भव्यात्मा द्विचरः पीत्वा, सद्गुरोर्वचनाऽमृतम् । आसन्नसिद्धिको जज्ञे, चारित्रग्रहणोत्सुकः ॥ ३३ ॥
अयमेव गुरुर्मेऽस्तु, संसारोदधितारकः । इत्यभिग्रहमाधाय, स ययौ स्वनिकेतनम् ॥ ३४ ॥

१ सूर्यः

ततो विद्यापुरं प्रागात्, आज्ञानुज्ञाकृते सुधीः । क्षीणकर्मगतिः पश्चा-दाययौ तत्र पत्तने ॥ ३५ ॥
तावदायुः समाप्तिं स्वां, विज्ञाय रविसागरः । पद्मासनस्थितः श्रीमान्, समाधिस्थजितेन्द्रियः ॥ ३६ ॥
क्षमयित्वा जीवराशिं, कृतनिर्यामणक्रियः । गच्छभारं समादिश्य, स्वशिष्यं सुखसागरम् ॥ ३७ ॥
स्मृतपञ्चनमस्कारो-जगाम स्वर्गिणां पदम् । गुरुभक्तिरतैनाग्नि-संस्कारश्चन्दनैः कृतः ॥ ३८ ॥
संघेन मिलितेनैव,-मष्टाह्निकमहोत्सवाः । व्यधीयन्त जिनेन्द्राणां, मन्दिरेषु महर्द्धिकाः ॥ ३९ ॥ कलापकम् ॥
क्रियायोगचणः शान्तः, सद्गुरुः सुखसागरः । विहारं कृतवाँस्तस्मा-त्तिष्ठत्येकत्र नो मुनिः ॥ ४० ॥
धरित्रीं पावयन् पाद-क्रमणैर्मुनिपुङ्गवः । प्रह्लादनपुरं प्राप, ध्वजतोरणराजितम् ॥ ४१ ॥
गुरौ दिव्यालयं प्राप्ते, विरहार्दितमानसः । द्विचरोऽपि तदास्थानं नामन्यत मनःप्रियम् ॥ ४२ ॥
सुखाब्धिं श्रीगुरुं श्रुत्वा, प्रह्लादनपुरस्थितम् । स्वयं तत्रागमत्सद्य-श्चारित्रग्रहणेच्छया ॥ ४३ ॥
गुरूणां सन्निधौ तिष्ठन्, विज्ञातमुनिशिक्षकः । निजेच्छां दर्शयामास, स भवोच्छेदकारिणीम् ॥ ४४ ॥
द्वीपेन्द्रियनिधिक्षोणि ( १९५७ ) प्रमिते वैक्रमेऽब्दके । मार्गशीर्ष सितेपक्षे, षष्ठ्यां चन्द्रजवासरे ॥ ४५ ॥
गुरुणा गुरुमोदेन, संघेन विहितोत्सवम् । दीक्षितः स विशुद्धात्मा, शासनोन्नतिहेतवे ॥ ४६ ॥ युग्मम् ॥
बुद्धिपाथोधिरस्तीति, बुद्धिसागरसंज्ञया । आजुहाव गुरुः संघ-साक्षिकं तं महामुनिम् ॥ ४७ ॥
तीर्थयात्रां वितन्वानः, शिष्यवृन्दसमन्वितः । गुरुः पवित्रयन्पृथ्वीं, जगाम सूर्यपत्तनम् ॥ ४८ ॥

१ कुशलः, २ पालणपुर. ३ बुध. ४ सुरत.

तत्रत्यजैनसंघेन, महोत्सवपुरःसरम् । गुरूणां कारितं भूरि-मोदात्पुरप्रवेशनम् ॥ ४९ ॥
पण्डितैः सह संपर्कं, कुर्वन् श्रीबुद्धिसागरः । बृहस्पतीयतेस्माशु, सद्बुद्ध्या मुनिवल्लभः ॥ ५० ॥
तदानीं मोहनमुनि-र्मुनिवर्यः स्वशिष्ययुक् । आसीत्तत्र जनव्रातै-र्धर्मबुद्ध्या निषेवितः ॥ ५१ ॥
तेषां महात्मनां योगः, संजातो मोदवर्धकः । अनुरागः शुभो जज्ञे, तस्मिन्सिद्धान्तवेदिनि ॥ ५२ ॥
अन्यदा मोहनमुनि-र्व्याख्यानसमये स्वयम् । शृण्वत्सु संघलोकेषु, मुदाऽऽचख्याविति स्फुटम् ॥ ५३ ॥
भाव्ययं विबुधख्यातः, शासनस्य प्रभावकः । माननीयो मुनीनां वै, सर्वेषां बुद्धिसागरः ॥ ५४ ॥
भव्यान्प्रबोधयन्भूरीन्, ततोऽगाद्राजपत्तनम् । तत्रत्यजैनसंघेन, प्रार्थितो मुनिपुंङ्गवः ॥ ५५ ॥
शासनोन्नतिमातन्वँ-श्चातुर्मास्यमकल्पयत् । ग्रन्थसन्ततिमातेने, स्वपरोपकृतिं स्मरन् ॥ ५६ ॥
अध्यात्मतत्त्वविद्विज्ञो-योगविद्याविशारदः । काव्यकेलिरतप्रज्ञो-मुनिवर्यो व्यराजत ॥ ५७ ॥
पुनः सूर्यपुरे चातु-र्मासीं स्थित्वा मुनीश्वरः । संघाग्रहेण भव्यानां, मनोभीष्टमपूरयत् ॥ ५८ ॥
जीवनादि महेभ्यानां, पूरिता कल्पना शुभा । समाधियोगतत्त्वानि, विस्तार्य तेन योगिना ॥ ५९ ॥
तन्मुनीन्द्रप्रभावज्ञो-भव्यसंघनिमन्त्रितः । मुम्बापुरीं ययौ भव्या-म्भोजमुत्फुल्लयन्मुनिः ॥ ६० ॥
तत्रत्यजनतामोदं, वर्द्धयन् मुनिपुङ्गवः । स्वशिष्यपरिवारेण, संजुष्टचरणाम्बुजः ॥ ६१ ॥
विदुषां संशयान् छिन्दन्, बोधयन् धर्मकाङ्क्षिणः नास्तिकाँश्च निराकुर्वन्, धर्ममार्गं प्रदीपयन् ॥ ६२ ॥

१ अमदावाद. २ बुद्धिसागरः ३ धर्मचन्द्रात्मजजीवणचन्द्र.

चातुर्मासीं शुभामेकां, व्यनैषीत्करुणामयीम् । धनाढ्यचमहेभ्यानां, मनस्तोषविधायिनीम् ॥ ६३ ॥
भव्योर्वीं स ततः सिञ्चन्, सद्बोधामृतधारया । आससाद पुरं पाद्रा-ख्यानं शिष्यसमन्वितः ॥ ६४ ॥
स्वेन संस्थापितं वसि-न्नध्यात्मज्ञानमण्डलम् । ज्ञानेन विशदीकृत्य, दीपयामास योगिराट् ॥ ६५ ॥
मोहनादिमहेभ्यानां, तत्त्वजिज्ञासुचेतसाम् । अभीष्टं पूरयामास, योऽध्यात्मज्ञानभास्वरः ॥ ६६ ॥
योगीन्द्रः स विदांश्रेष्ठः, ततोऽगाद्वटपत्तनम् । भक्तिभारनताङ्गेन, सङ्घेन विहितोत्सवम् ॥ ६७ ॥
अमात्यप्रमुखाः सर्वे, विद्वांसः श्रुतकीर्त्तयः । विधाय दर्शनं येषां, परमं मोदमासदन् ॥ ६८ ॥
गुर्जरेन्द्रमहीपेन, तद्व्याख्यानपिपासुना । प्रार्थितो यो मुनिर्भव्य-राजसभ्य व्यभूषयत् ॥ ६९ ॥
व्याख्यानं नैतिकं दत्तं, गुरुणा तत्त्वसंभृतम् । निशम्य मस्तकं कोऽपि,नाधुनोदिति नो सदा ? ॥ ७० ॥
क्रमेण विहरँस्तस्मा-न्मुनीन्द्रः स समागमत् । संपदां निलयं जैनैः, पेथापुरपुरं श्रितम् ॥ ७१ ॥
कतिचिद्वासराँस्तत्र भव्याम्भोजदिवाकरः । स्थित्वा यो धर्मबोधेन, तारयामास देहिनः ॥ ७२ ॥
तत्रत्यजैनसंघेन, संघीभूय सुमन्त्रितम् । आचार्यपदयोग्योऽयं, गीतार्थमुनिसत्तमः ॥ ७३ ॥
विद्याविशारदानाञ्च, नानापत्तनवासिनाम् । विदुषामागतां श्रुत्वा, संमतिं हि तथाविधाम् ॥ ७४ ॥
निश्चयामासिवान् संघः, प्रमोदमेदुराशयः । सूरिपदं प्रदातव्यं, योग्यायास्मै चतुर्विधः ॥ ७५ ॥
नभोद्वीपनिधिक्षोणी-मिते (१९७०) वैक्रमवत्सरे । मार्गशीर्षसिते पक्षे, पूर्णिमाशनिवासरे ॥ ७६ ॥

१ ज्ञान प्रसारक— २ हेमचंद्रात्मज मोहनलाल. ३ सयाजीराव गायकवाड.

वलिष्ठयोगसंपन्ने, सुमुहूर्त्ते विजिस्वरे । सूरिपदाभिषेकोऽभूत्,-मुनिराजस्य योगिनः ॥ ७७ ॥
जयघोषं वितन्वानाः, शासनोन्नतिशंसकाः । विबुधा नागराः संघा-दूरदेशनिवासिनः ॥ ७८ ॥
तदानीं स्तुतिमातेनु-स्तद्गुणै रञ्जिताशयाः । शासनं दीपयामास, सूरिवर्यः स बुद्धिमान् ॥ ७९ ॥
अथेलर्षिरसक्षोणि-मिते (१९७२) वैक्रमहायने । सानन्दपत्तनेऽवात्सी-च्चातुर्मासीं मुनीश्वरः ॥ ८० ॥
पन्यासवीरविजयः, शिष्यवृन्दसमन्वितः । जैनतत्त्वसुधासारै-र्वचोभिर्बोधयञ्जनान् ॥ ८१ ॥
अन्येऽपि मुनयस्तस्थु-र्योगोद्वहनहेतवे । श्रीमदजितपाथोधि-प्रमुखास्तदनुज्ञया ॥ ८२ ॥
श्रीमत्सागरसंघस्य, गुरूत्साहेन कारिता । तेन श्रमणपूज्येन, उपधानतपः क्रिया ॥ ८३ ॥
अब्धिद्वीपाङ्कभूमीयुग् (१९७२) वत्सरे वैक्रमे शुभे । मार्गशीर्षमिते पक्षे, पञ्चम्यां शनिवासरे ॥ ८४ ॥
पन्न्यासपदमायच्छ-द्वर्जिताऽब्धितपस्विने । यथोक्तविधिना प्रातः, श्रीलाभविजयाय च ॥ ८५ ॥
तस्मिन्नेवक्षणे सूरि-र्योगीन्द्रो बुद्धिसागरः । सर्वगच्छेषु माध्यस्थ्यं, बिभ्रद्धर्मभृतां वरः ॥ ८६ ॥
संघाग्रहेण योग्याय, वीरविजयसाधवे । आचार्यपदवीं प्रादात्, सिद्धान्तागमवेदिने ॥ ८७ ॥
गोधावीपत्तनेऽथ श्री-जैनसंघप्रमोदतः । सूरीश्वरेण तेन श्री-गौतमस्वामिनः प्रभोः ॥ ८८ ॥
प्रतिष्ठाऽक्रियत श्रेयः-संपत्तिप्रथनोत्कटा । तदञ्जनशलाका च, जिनबिम्बैः सहाद्भुतैः ॥ ८९ ॥
ततः पवित्रयन्भूमिं, क्रमात्सूरीश्वरः सुधीः । शिष्यवृन्दसमायुक्तः, प्रांतिपत्तनमाययौ ॥ ९० ॥

१ प्रांतिज.

सर्वात्मभिः सार्द्ध—मनुभूयेत वस्तुतः। तत्प्रेमैव महाब्रह्म—रसाऽनुभवदायकम् ॥ ६ ॥
ातीयजीवानां, देहमन्दिरवासिनाम्। आत्मवद्दर्शनं नित्यं, विशुद्धप्रेमतो भवेत् ॥१०॥
ा लयं यान्ति, शुद्धप्रेमप्रभावतः। यत्र यत्र भवेत् प्रेम, तत्र तत्र न दुष्टता ॥११॥
ागेण, निन्दादिदोषसंचयः। प्रशस्यप्रेम पुण्याय, मोक्षाय च मनीषिणाम् ॥१२॥
रागेण, भवे दुःखपरंपरा। सर्वदुःखविनाशाय, शुद्धप्रेम कुरुष्व भोः ? ॥१३॥
जायन्ते, सत्प्रेमैव महातपः। सत्प्रेमैव महायोगो—मैत्र्यादिभावमूलकम् ॥१४॥
सीताऽस्ति, स्वात्मारामः सनातनः। आत्मा कृष्णो हरि र्वीरो—राधाप्रेमैव भास्वती ॥१५॥
ीति—र्धर्मयोनिर्हिशाश्वती। नभोरूपः सदात्माऽस्ति, ज्ञानलिङ्गः सनातनः॥
:, सत्प्रीतिः पार्वती शुभा। जीवानां देहरूपेषु, मंदिरेषु विराजते ॥१७॥
गेन, भुक्तिः सात्त्विकरागतः। शुद्धप्रेमविहीना ये, निर्जीवा नीरसा जनाः ॥१८॥
सद्भक्ति—रात्मवद् विश्वदर्शिका। पिण्डब्रह्माण्डयोरैक्यं, जायते नैव संशयः॥१९॥
रीरेषु, प्रेमाविर्भावता भवेत्। आनन्दोल्लासरोमाञ्चो—द्रवस्तेन प्रजायते ॥२०॥

प्रेममूलं सुदाम्पत्यं, मित्रत्वं धर्मभावना । सम्बन्धाश्चविबोद्धव्याः, सम्यक्त्वधर्मेहतवः ॥२१॥
दयादिधर्मभावानां, मूलं प्रेमाऽस्ति भूतले । देवगुर्वादिषु प्रेम, जायते भव्यदेहिनाम् ॥२२॥
शुद्धप्रेम तथा ज्ञानं, सर्वदोषनिवर्त्तकम् । ज्ञानं शुष्कायते प्रेम्णा, विना सर्वत्र सर्वदा ॥२३॥
कृत्रिमं प्रेम संतज्य, सत्यप्रेम भजस्व भोः! सात्त्विकं प्रेम लब्ध्वा त्वं, यास्यसि शाश्वतीं गतिम् २४
अगम्यः प्रेमधर्मोऽस्ति, केचिज्जानन्ति योगिनः। जानतामपि लोकानां, कश्चित्तं याति वस्तुतः २५
शुद्धानन्दो न यत्राऽस्ति, तत्र प्रेमविकारता । विशुद्धप्रेम यत्राऽस्ति, तत्रानन्दः स्फुटो भवेत् ॥२६॥
विशुद्धप्रेमतानस्य, प्राकट्यं प्रेमयोगिनाम् । हृत्सु संजायते रूप-वित्तादिमोहमन्तरा ॥२७॥
परस्परं हि लोकाना-मैक्यं भवति रागतः । आत्मपरात्मनोरैक्यं, भवेत्प्रेम्णा सुयोगिनाम् ॥२८॥
सत्यप्रेम्णा भवेच्छ्रद्धा, सामर्थ्यं जायते हृदि । सर्वयोगेषु सत्प्रीतिः, श्रयते सर्वसद्गुणान् ॥२९॥
सत्यप्रेमिजनानां स्यात्, स्वार्पणं तु परस्परम् । मत्तद्भेदो न संबन्धे, सोऽहं सोऽहं परस्परम् ॥३०॥
त्वमेवाहमहं त्वं च, त्वन्मद्भावो न विद्यते । शुद्धप्रीत्या पराणांतु, निर्विकल्परसोदधिः ॥ ३१॥
निर्विकल्पमहाप्रेम-रसानुभवयोगतः । साक्षाच्छुद्धात्मसंवेदात्, प्राप्तव्यं नावशिष्यते ॥ ३२॥

…प्रेमरसास्वादे, कृते निर्भयताऽऽत्मनि । जायतेऽनुभवःसाक्षा—द्दृश्यते प्रेमयोगिभिः॥३३॥
लोकसंज्ञामपाकृत्य, शास्त्रसंज्ञां तथा पराम् । शुद्धप्रेमणि संलीनः, प्रेमवान्राजते सदा ॥३४॥
सत्यप्रेमिजने कृत्वा, नामरूपसमर्पणम् । उन्मनीभावमारुह्य, प्रेमी शुद्धात्मतां श्रयेत् ॥३५॥
…र्विकल्पं परब्रह्म, शुद्धप्रीत्याऽनु भूयते । अशुद्धाः प्रेमसंबन्धा—यत्र यान्ति लयं ध्रुवम् ॥३६॥
…स्य, प्रत्यक्षं दर्शनं भवेत् । निर्विकल्पमहाप्रेम—योगेन प्रेमयोगिनाम् ॥३७॥
…से, शङ्का नास्ति परस्परम् । देहवित्तादिसंमोहो—यत्र तिष्ठति नो कदा ॥३८॥
…त्यप्रेम … । लग्नं, जायते न परस्परम् । कायलग्नमहत्ता तु, यत्र किञ्चिन्न विद्यते ॥ ३९ ॥
…स्तु मौनभावोऽस्ति,हृद् द्वारेण प्रकाशते।दिव्यप्रीत्या प्रतिज्ञाया-अभावोऽस्ति निसर्गतः४०
…श्रयात्राऽस्ति,भेदाद्याःसन्ति नो हृदि। आज्ञांविनाभवेत् कृत्यं,द्वेषाद्यान्तिनष्टताम्
…, वैरंप्रत्युत वर्द्धते । प्रेम्णैव वैरनाशोऽस्ति, सर्वथा प्रत्ययः सताम् ॥ ४२ ॥
—देवेनाऽहिः प्रबोधितः । क्रूरा अपि क्षमां यान्ति, शुद्धप्रेमप्रभावतः ॥४३॥
दुष्टवैरिजने येतु, कुर्वन्ति प्रेमभावनाम् । प्रान्ते संत्यज्य वैरं ते, भवन्ति प्रेमबन्धवः ॥४४॥

प्रेमशक्तिसमा शक्ति–रपरा न जगत्त्रये । प्रेमाकर्षणयोगेन, स्वकीयं जायते जगत् ॥४५॥
राजसं तामसं प्रेम, सात्त्विकं च निबोधत। सात्त्विकं हृदि संधृत्य, पूर्णानन्दं भजस्व भोः ? ॥४६॥
प्रतिदानस्य संकल्पो–जायते न कदाचन । उच्चनीचादयोभेदा–लयं यान्ति समन्ततः ॥४७॥
प्रतिज्ञापालनं पूर्णं, प्रेम्णैवजायते सताम् । निरवधिमहाप्रेम, पूर्णब्रह्म तदुच्यते ॥ ४८ ॥
पूर्णप्रेम परब्रह्म, पूर्णज्योतिर्मयः स्वयम्। निर्विकल्पात्मनावेद्यो–विरागेण निजात्मनि ॥४९॥
अज्ञानिना न संवेद्यः, संवेद्यः प्रेमयोगिना । शुद्धप्रेममयं ब्रह्म, स्वेनानुभूयते स्वयम् ॥५०॥
परब्रह्म परंज्योति–र्महावीरोजिनेश्वरः। स्वयमात्मा वपुःस्थोऽयं, शुद्धप्रेम्णा प्रकाशते ॥५१॥
आकर्षकं महाप्रेम, सर्वग्रहप्रवर्त्तकम् । लयसर्गकरं प्रेम स्वयं स्वेनानुभूयते ॥ ५२ ॥
शुद्धात्मा श्रीमहाब्रह्म, प्रेम्णैव व्यज्यतेप्रभुः। ब्रह्मविष्णुमहेशानां, पूर्णप्रेमनियामकः ॥५३॥
व्यापकःसूक्ष्मरूपेण,प्रेमैव स्वान्तरप्रभुः। अविश्वासोन यत्राऽस्ति, निश्चयःप्रेमतःस्वयम् ॥५४॥
धूर्त्तानां प्रेमचेष्टासु, सत्यप्रेम न विद्यते। नास्तिकैर्मूढलोकैश्च, सत्यप्रेमी न वञ्च्यते ॥५५॥
प्रेम परीक्ष्यते प्रेम–योगिना परया विदा। परायां भासते सत्यं, सत्यप्रेम्णैव सद्धृदि ॥५६॥

सेवाभक्ति र्भवेत् प्रेम्णा, वैयावृत्यं तथा शुभम्। प्रवृत्तीनां महामन्त्रो, निवृत्तीनां तथा ध्रुवम् ॥
धर्मप्रचारकं प्रेम, सर्वजातीयजीवनम्। जीवेत् प्रेम विनानैव, जैनधर्मः सनातनः ॥ ५८ ॥
धर्मरुच्यादिपर्यायाः, प्रेम्णोवाच्या विवेकतः। व्यभिचारादिलाम्पट्यं, काममोहोद्भवं खलु ।५९।
देहवित्तादिके स्वार्थे, सत्यप्रेम न संवसेत्। विद्यारूपादिके शुद्ध-प्रेमवासो न संभवेत् ॥ ६० ॥
दुष्टकामो न यत्राऽस्ति, तत्र प्रेमप्रकाशता। धर्म्यप्रेम जगद्धर्म–स्थापकं सर्वशक्तितः ॥६१॥
दोषाः सन्ति न सत्प्रीत्यां, नैवास्ति कामवासना। कामादयस्तुमोहेन, पुंवेदात्संभवन्ति यत्॥
पुंवेदादिकमोहस्य, नाशोऽस्ति प्रेमशक्तितः। मनोवाक्काययोगानां, पावित्र्यं प्रेमयोगतः ॥६३॥
गुणानां दर्शनं यस्मा-द्दुर्गुणानां न कर्हिचित्। सद्गुणानां प्रचारोऽस्ति, तस्मात् प्रेम भजस्व भोः ?॥
प्रेम्णा शारीरमारोग्यं, शोकभीत्यादिसंक्षयः। प्रेम्णा प्रभुकृपासिद्धिः, सद्गुरूणां तथा भवेत्॥
प्रेम्णा क्लेशविनाशोऽस्ति, मनःसाम्यं भवेत् सताम्। सत्यप्रेम न यत्राऽस्ति, तत्रशुष्कं मनः खलु
ज्ञानिनां प्रेम संबन्धः, प्राणान्तेऽपिनाभिद्यते। देहवित्तादिनाशेऽपि, सत्यप्रेम न नश्यति ॥६७॥
पूर्णदुर्भाग्यसंप्राप्तौ, मृत्युकालेऽपि सज्जनाः। सत्यप्रेम न मुञ्चन्ति, धूर्त्तकोटिप्रलोभनैः ॥६८॥

मनोवाक्कायसंमेलः, सत्यप्रेम्णा परस्परम् । सर्वत्र सत्यलोकानां, जायते नैव संशयः ॥ ६६ ॥
मनोवाक्काययोगाना–मैक्यं नृणां परस्परम् । दिव्यस्वर्गस्य संप्राप्तिः, प्रेम्णाऽत्र भवति स्वयम्
पारिणामिकभावस्तु, शुद्धप्रेमैव देहिनाम् । चारित्रमान्तरं ज्ञेयं, प्रेमैव रसनायकैः ॥ ७१ ॥
आनन्दं परमप्रेम, रागद्वेषविवर्जितम् । पूर्णरसं तु सत्प्रेम, प्राप्याऽन्यन्नावशिष्यते ॥ ७२ ॥
दृष्ट्वा परस्परं नृणां, यत्सुखं जायते हृदि । प्रेमैव तत्तु संबोध्यं, निरपेक्षं सदा भवम् ॥ ७३ ॥
शुद्धप्रेमरसः स्वात्मा, यं प्राप्य प्रेमयोगिनः । आनन्दाऽद्वैतभावेन, तिष्ठन्ति निर्भयाः सदा ॥७४॥
उत्तिष्ठत जनाः ? प्रेम्णा, सर्वत्र प्रेमभावनाम् । भावयन्तु विवेकेन, सर्वमङ्गलदायिकाम् ॥७५॥
शुद्धात्मैव महाप्रेम, ज्ञायते येन योगिना । तेन प्राप्तं जगत्सर्वं, विश्वब्रह्मविलोकिना ॥७६॥
पूर्णप्रेममयं ब्रह्म, जानन्ति सद्व्यपेक्षया । योगिन आत्मभावेन, साकारं च निरञ्जनम् ॥७७॥
प्रेमरूपं जगत्सर्वं, पश्यन्तु प्रेमयोगिनः । नाऽप्रियं विद्यते किञ्चि–च्छुद्धप्रेमात्मयोगिनाम् ७८
सर्वं प्रियं सतां हृत्सु, नाऽप्रियाः केऽपि देहिनः । प्रेमाग्निपक्वलोकानां, दशेयं जायते स्वतः ॥७६॥
मनोवाक्काययोगेषु, प्रेमाविर्भावयोगतः । प्रभुरूपं जगत्सर्वं, दृश्यतेऽनुभवः स्वयम् ॥ ८० ॥

देहभावे विलीनेहि, प्रेमाविर्भावता भवेत्। साक्षात्कारं प्रभोरूपं, सर्वत्र दृश्यते तदा ॥ ८१ ॥
स्वाभाविकं भवेत्प्रेम, मोहस्तु कृत्रिमो भवेत्। आत्माकर्षकरूपेण, प्रेमाविर्भावता भवेत्॥८२॥
काममैथुनरूपेण, काममोहोदयो भवेत्। आत्मस्वैक्यस्वरूपेण, प्रेम सर्वत्र राजते ॥ ८३ ॥
प्रेमाधीना हि देवाःस्यु–र्मोहाधीनास्तु राक्षसाः मोहाधीनास्तुवाह्याःस्यु–रान्तराः प्रेमयोगिनः॥
स्थूलं सूक्ष्मं भवेत्प्रेम, स्वार्थिकं पारमार्थिकम्। देशिकं व्यापकं बोध्यं, मूर्ताऽमूर्तमपेक्षया॥८५॥
शुद्धप्रेमानुभावेन, स्वात्मवत् सर्वदेहिनाम्। भवेत् सेवा स्वभावेन, तत्र किञ्चिन्न भेदता ॥८६॥
शुद्धप्रेमणि संजाते, समः सर्वत्र जायते। आत्माऽभिन्नं भवेत्तत्र, प्राकट्यं परमात्मनः ॥८७॥
प्रेमणि नैव दासत्वं, प्रभुत्वं नैव देहिनाम्। ऐक्यं समं प्रियं सर्वं, भासते निर्विकल्पकम् ॥८८॥
रागद्वेषविकल्पास्तु, नामरूपादि संश्रिताः। अज्ञानेन समुत्पन्नाः, प्रेम्णा यान्ति लयं स्यात्॥८९॥
सर्वपदार्थसौन्दर्यं, पश्यन्ति प्रेमतोजनाः। सर्वसौन्दर्यसौन्दर्यं, प्रेम्णः सर्वत्र राजते ॥ ९० ॥
ॐकारः सर्ववर्णेषु, प्रेमरूपोऽस्ति सर्वथा। ह्रीँ श्रीँ क्लीँ मन्त्रवर्णास्ते, प्रेमत्र्यक्षकशक्तयः ॥९१॥
प्रियं यत्तत्प्रभो रूपं, सर्वत्र सर्वथा सदा। अप्रियं यत्तुमूढानां, तत् प्रियं प्रेमिणां हृदि ॥९२॥

प्रेम्णा प्रियं जगत्सर्वं, पश्यन्तु प्रेमयोगिनः। रागाऽभावाद्विरागत्वं, तदा संजायते सताम् ॥९३॥
भवन्तु प्रेमिणो लोका—भवन्तु नैव मोहिनः। शुद्ध प्रेमाऽमृतं पीत्वा, जीवन्तु विश्वजीवनाः॥९४॥
परात्मैव भवेच्छुद्ध—प्रेम विश्वस्य जीवकः। प्रभुप्रेम विदित्वैवं, भवन्तु विश्वजीवनाः ॥ ९५ ॥
आत्मैव परमात्माऽस्ति, प्रेमयोगी प्रभुर्महान्। देहस्थोऽपि न यो देही, तं सर्वत्र विलोकय ॥९६॥
यस्मिन्सति प्रियं सर्व—मप्रियं यदभावतः। पश्यन्तु तं प्रियं लोका—आत्मानं प्रेमरूपकं ॥९७॥
आत्मनो नवधा भक्तिं, प्रेमरूपां सनातनीम्। कुर्वन्तु प्रेमिणो वाह्या—मान्तरां सर्वशक्तितः ॥९८
आत्मानं पुरुषं विद्धि, प्रकृतिं तु स्त्रियं शुभाम्। प्रकृतिः प्रीतिरूपेण, विश्वात्मन्येव संवसेत् ॥९९
सर्वजीवेषु सौन्दर्य—माकर्षकं विराजते। तत्तु प्रेमैव संवोध्य भवन्तु प्रेमिणो जनाः ॥ १०० ॥
सर्वत्र विलसत्यत्तु, सौन्दर्यं प्रेमजीवनम्। व्यक्तं कुर्वन्तु भोलोकाः? आत्मज्ञानेन तद्धृदि ॥१०१
भाव एव महाप्रेम, रुचिरेव न संशयः। गुणस्थानाऽधिरोहेषु, प्रेमैव प्रगतिप्रदः ॥ १०२ ॥
शुद्धभावो भवेत्सद्यः, शुद्धप्रेमैकभावतः। आत्मरमणरूपेण, शुद्धप्रेमैव वोधत ॥ १०३ ॥
लसत्यनेकरूपेण, आनन्दः सर्वदेहिषु। हर्षोल्लासादिरूपेण, सर्वत्र ब्रह्ममूर्त्तिमत् ॥ १०४ ॥

मोहमान विकारेषु, प्रेम किञ्चिन् न विद्यते। आत्मप्रेमोज्ज्वलं मन्त्रं, केचिज्जानन्ति पंडिताः१०५
विकासयन्तु सत्प्रेम, सर्वत्र सर्वदेहिषु। अमृता येन जायन्ते, लोका आत्मस्वभावतः ॥१०६॥
अन्तरात्मा भवेत्प्रेमी, पश्चाद्याति परात्मताम्। ज्ञानिषु तारतम्येन, शुद्धप्रेमसमुद्भवः ॥१०७॥
सर्वजीवोपरिप्रेमा, यस्य जातो न वस्तुतः। तस्योद्धारो भवेन्नैव, विना प्रेम न पात्रता ॥१०८॥
... भवत्येव न संशयः। गुणाधारमहाप्रेम, सर्वस्वार्पणकारकम् ॥ १०९ ॥
... तान्निबोधत। मौनभावेन कर्तव्यं, भवत्येव न संशयः ॥११०॥
...देपदे। सर्वसम्बन्धशून्यत्वं, शून्यत्वंचात्मनस्तथा ॥ १११ ॥
...सागरे। शुद्धप्रेमाऽर्हतांसेवा, कर्तव्याऽतोविवेकतः ॥११२॥
...नाम्। परस्परं भवत्येव, सर्वत्र सर्वथा सदा ॥ ११३ ॥
...। ज्ञानी जानाति हृत्प्रेम, प्रेमी प्रेम परीच्यते ॥११४॥
...णे। प्रेम नैसर्गिकं नृणा—मगम्यं वर्त्तते स्वयम् ॥११५॥
...भवेत्। पूर्वभवस्य संस्कारा—ल्लोकेषु तस्य संभवः ॥११६॥

सर्वदेवेश्वरोवीरो–विनाप्रेम न रज्यति। अतः सत्प्रेम निष्कामं, प्रकाशयन्तु मानवाः ॥११७॥
ॐअर्हं प्रेमरूपाय, नमो वीराय तायिने। प्रभुप्राप्तिः कलौ प्रेम्णा, सत्यं तथ्यं वदाम्यहम् ॥११८॥
वार्त्तां कुर्वन्ति चित्तानि, मौनेन यत्र जल्पनम्। नम्रीभूताः सदात्मानो-भवन्ति प्रेमशक्तितः ॥११९
कामभोगादि चेष्टासु, प्रेमशब्दोपयोगिता। कृता मूढजनैर्मोहा–द्धा हा?? तैर्लुण्टितं जगत् ॥१२०
कामोदयो भवेन्मोहात्, पुंवेदादिप्रचारकः। पुंस्कामादिवियोगे तु, भवेत्प्रेमोदयो हृदि ॥१२१॥
प्रेमैवपरमं तेजः, सर्वत्रव्यापकं परम्। तल्लीनः सर्ववृत्तीनां, जेता भवति सर्वथा ॥ १२२ ॥
शुद्धात्मा प्रेमशब्देन, वाच्य आनन्द रूपकः। प्रेमशब्दस्य वाच्यत्वं, ज्ञातव्यं नैव मैथुने ॥१२३॥
मैथुनं न सदा प्रेयः क्षणिकं कामवृत्तिजम्। आत्मरूपं भवेन्नित्यं, प्रेम सम्मेलनंपरम् ॥ १२४ ॥
मन्मयस्तन्मयो भावो–मत्त्वभेदविनिर्गतः। अलौकिकं भवेत्प्रेम, वाचातीतं समाधिजम्।१२५।
अहंत्वं वृत्तिभावाना–माविर्भावो न जायते। परप्रेम भवेत्तत्र, पूर्णानदस्य भोगतः ॥ १२६ ॥
पूर्णानन्देन पूर्णत्वं, प्रेमाऽवधूतयोगिनः। प्रेमाऽवधूतचेष्टासु, निर्दोषत्वं स्वभावतः ॥१२७॥
आकर्षकं महाप्रेम्णि, पूर्णवीर्यमलौकिकम्। संवेद्यं प्रेमिभिः पूर्णं, यत्र तत्र यदा तदा ॥ १२८ ॥

प्रेमिणां चक्षुषिज्योति-रलौकिकं प्रकाशते। दिव्यतेजोमयं सर्वं, सात्त्विकप्रेमयोगिनाम् १२६
प्रेमावस्थासु सर्वासु, निर्विकल्पा परास्मृता। मध्यमासविकल्पाऽस्तिं, जघन्यादोपमिश्रिता १३०
मुक्तिरसंख्ययोगेन, भाविता सर्वदर्शिभिः। शुद्धप्रेममयैर्योगैः, शीघ्रं सर्वत्र देहिनाम्॥ १३१ ॥
शुद्धप्रेम्णैव सम्यक्त्व-प्राप्तिपूर्वकमोक्षता। प्रेमपूर्वकचारित्रं, तत्पूर्वा मोक्षलाभता ॥१३२॥
सर्व योगोपरिप्रेम, योगस्य मुख्यता कलौ। यं प्राप्य देहिनः सर्वे, जायन्ते सरसा जनाः॥ १३३ ॥
प्रेमाविर्भावयोगेन, दुर्गुणानां क्षयो भवेत्। अतः प्रेमरसं पीत्वा, भवन्तु सुखिनो जनाः॥ १३४ ॥
आत्मन्येव वसेत्प्रेम, स्वात्मरूपं प्रचक्षते। जडेषु प्रेमनास्त्येव, जानन्ति प्रेम योगिनः॥ १३५ ॥
प्रकृतेर्यत्र सौन्दर्यं, तत्र प्रेमविलासता। ज्ञानिनां ज्ञानतोवेद्या, मूढानां तत्र भोगता॥ १३६॥
देहादौ जीवसम्बन्धा-त्तत्र प्रेमसमुद्भवः। मृतदेहेषु न प्रेम, तत्रात्मनां वियोगतः ॥ १३७॥
आत्मज्ञानेन सौन्दर्यं, जडेषु चेतनेषु च। तत्राऽद्वैतस्वरूपेण, प्रेम संजायते स्वतः ॥ १३८॥
आत्माद्वैतस्वरूपस्य, सापेक्षातो विवेकिनाम्। जडात्मैक्यस्वरूपेण, प्रेम सर्वत्र राजते ॥१३६॥
सत्प्रेमैव महाब्रह्म, सर्व जीवेषु वर्त्तनात्। हिरण्यगर्भदेवेशः, प्रेमात्मसंघशक्तितः ॥ १४० ॥

प्रेमात्मनां महासंघ-रूपोऽस्ति भगवान्स्वयम्। तदिच्छातो जगत्सर्वं, वर्त्तते कर्मचक्रवत् ॥१४१॥
विश्वप्रेमस्वरेणैव, विश्वचक्रं प्रवर्त्तते । शुद्धप्रेमस्वरेणैव, रसः सर्वत्र देहिषु ॥ १४२ ॥
माताप्रेम पिताप्रेम, प्रभुः प्रेम जगद्गुरुः । मित्रप्रेम कुटुम्बं च, पुत्रः प्रेम वधूस्तथा ॥१४३॥
सर्वत्र रुचिताप्रेम्णा, सर्वजीवेषु जानताम्। प्रेमरूपं जगत्सर्वं, जातं तस्य न शून्यता ॥ १४४ ॥
प्रेमाऽभावान्न शिष्यत्वं, गुरुत्वं च कदाचन। प्रेमाऽभावात्प्रभोर्भक्ति-र्जायते नैव देहिनाम्।१४५।
यत्र प्रेम भवेत्तत्र, श्रद्धासं जायते सताम्। प्रेमाऽभावात्सुकार्याणां, प्रवृत्तिर्नैव संभवेत् ॥१४६॥
प्रेमाभावाद्भवेद्भेदो-यत्र तत्र स्वभावतः। प्रेम्णा नित्यात्मसंबन्धे, प्राणान्तेनैव भेदता। १४७।
यस्य प्रेममयी वाचा, पूर्णप्रेममयं मनः। पूर्णप्रेममयो देह-स्तस्यात्मा स्वर्गदेवराट् ॥ १४८ ॥
जागृतिं प्रेमभावस्य, कुर्वन्तु सर्व देहिषु। स्वर्गरूपो हि संसारो-जायते येन सत्वरम् ॥ १४९ ॥
मिष्टान्मिष्टतरं प्रेम, यत्रतत्राऽस्ति देहिनाम्। अलौकिकं भवेत्सर्वं, प्रेमिणां सर्व कर्मसु ॥१५०॥
प्रेम्णो ज्ञानरसोऽस्त्येव, ज्ञानात्पूर्णा रसोदयः। अतो ज्ञानरस प्राप्तिः, कर्त्तव्या प्रेमदेहिभिः ॥१५१॥
ज्ञानतः सर्वसौन्दर्यं, भासते सर्व वस्तुषु। ज्ञानरूपं हि सौन्दर्य-मात्मनि प्रेमरूपकम् ॥१५२॥

परस्परोपकाराय, सत्प्रेमैव प्रियंकरम्। प्राकट्यं तस्य कर्त्तव्यं, सर्वकर्त्तव्यकर्मसु ॥ १५३ ॥
सत्प्रेमणि वरं मृत्युः, प्रेमाऽभावेन जीवनम्। अमृतत्वं परं प्रेम, आत्मज्ञानेन लभ्यते ॥१५४॥
सर्वजीवैः सहप्रेम, मैत्रीभावाय जायते। ततः समत्वसंलाभात्, समाधिर्जायते सताम् ॥१५५॥
यत्रात्मैव परात्माऽस्ति, वेद्यतेऽनुभवः स्वतः। शुद्धप्रेम्णः समाधिस्तु, जायते नाऽत्रसंशयः॥१५६॥
पूर्वसंस्कारजं प्रेम, गुप्तं नैव कदा भवेत्। दृष्ट्वा परस्परं शीघ्रं, प्रेमी प्रेम्णोपलक्ष्यते ॥१५७॥
मनोवाक्कायवित्तादि, तुच्छं नासामलादिवत्। स्वतन्त्रं सर्वदोत्कृष्टं, शुद्धप्रेम सदा स्तुमः॥१५८॥
शुद्धप्रेमणि निर्दोषं, विश्वं सर्वं स्वभावतः। वस्तुतस्तु स्वभावेन, ज्ञायते प्रेमयोगिभिः ॥१५९॥
सर्वत्र प्रेमिभिर्दोषा–दृष्टव्या न परस्परम्। एकएव प्रभुर्वीरो विज्ञाय सर्वदेहिनाम् ॥१६०॥
कामादिवासनाजेता, प्रेमपात्रं भवेज्जनः। नीतिप्रेमप्रभावेण, मर्यादा प्रेमतां श्रयेत् ॥ १६१ ॥
परिपक्वमहाप्रेम्णो–व्यापकप्रेमजायते। व्यापकप्रेमलाभेन, भवेत्प्रेमी रसेश्वरः ॥ १६२ ॥
वैराग्यस्याऽपि वैराग्य–मास्तिकस्य विचारणा। प्रेमैव व्यापकं ब्रह्म स्तुवे पूर्णरसेश्वरम् ॥१६३॥
एकेन्द्रियादि जीवेषु, व्यापकाय नमोनमः। सर्वजातीय जीवेभ्यो–नमः प्रेमविलासतः ॥१६४॥

सर्वजीवाः परात्मानः, सत्तया प्रेमरूपिणः। अतस्तेषां नमस्कारो–भवत्वेव मुदा सदा ॥१६५॥
नमोऽस्तु सर्वजीवेभ्यः, प्रेम्णा सर्वत्र सर्वदा। आत्मैक्यं निर्विकल्पं य–त्तद्भूयाज्जैनशासनम् ॥
प्रेमपूर्वकचारित्र–धर्मास्तित्वं कलौ गतम्। अतः प्रेम्णैव चारित्रं, प्राप्यते सत्रे साधुभिः ॥१६७॥
विचारादधिकं प्रेम, यस्याचारे प्रवर्त्तते। तस्य प्रेमात्मनः शुद्धि–र्जायते कृपयागुरोः ॥ १६८ ॥
गुरोः कृपां विना नास्ति, हृदि प्रेमोद्भवः कदा। अतः स्त्रीपुरुषैः सेवा, कर्त्तव्या सद्गुरोः सदा ॥१६९॥
गुरोः कृपाशिषा प्रेम–प्राप्तिर्भवति देहिनाम्। दर्शन ज्ञानचारित्र–प्राप्त्या मोक्षो भवेत्ततः॥१७०॥
शुद्धप्रेमैवसद्धर्मः, सर्वत्र व्यापकः सदा। प्रत्यक्षो ज्ञानिभिर्वेद्यो–महानभेद आन्तरः ॥ १७१ ॥
सर्वधर्मा लयं यान्ति, सत्यप्रेमणि वस्तुतः। तस्मात्कव्यं प्रकर्तव्यं, जैनैः प्रेमाऽनुयायिभिः ॥१७२॥
ब्रह्मप्रेमप्रतिकानि, सेव्यानिप्रेममार्गिभिः। प्रेममयं च सद्रूपं, प्रतिकं शर्मकारणम् ॥ १७३ ॥
शुद्धप्रेममहाभक्तै–र्गीतार्थ प्रेमिसद्गुरोः। आज्ञा सदैवमन्तव्या, सर्वस्वार्पणयोगतः ॥ १७४ ॥
सत्प्रमैव महाभक्ति–र्व्यापकदेवसद्गुरोः। कर्तव्या प्रेमिभिर्लोकैः, सद्गुरूक्तप्रबोधतः ॥ १७५ ॥
सत्यं नैसर्गिकं प्रेम, सत्यप्रेमिसमागमे। गुप्तं नैव भवेत्कुत्र, प्रत्यक्षं वेद्यते जनैः ॥ १७६ ॥

प्रकृतिपारगन्तॄणां, योगिनां प्रेमवेदनम्। शुद्धब्रह्मतयासाक्षा—द्भवत्येव न संशयः ॥ १७७ ॥
प्रकृतिप्रीतिमातृत्वं, यस्यात्मनि प्रकाशते। कामभोगादिसंकल्प—नाशस्तस्य प्रजायते ॥१७८॥
सर्वत्रव्यापकप्रेम, नैवाऽन्यत्र परिभ्रम। आत्मन्येवपरप्रेम—प्रकाशो जायते सताम् ॥ १७९ ॥
सर्वतीर्थमयं प्रेम, विद्यतेसर्वदेहिषु। भक्त्या सर्वत्र जीवानां, प्रेमब्रह्म प्रकाशते ॥ १८० ॥
वीरस्य प्रेमनामैव, संबोध्य भक्तिभाजनैः। महावीरार्हतः पूजा, कर्त्तव्या सर्वकर्मभिः ॥१८१॥
दयावात्सल्यरूपाणि, प्रेम्णः सर्वत्रबोधत। सर्वत्र सर्वलोकेषु, प्रेम चिन्तामणीयते ॥ १८२ ॥
शाब्दिकास्तार्किकाः शुष्काः शुद्धप्रेमविना हहा?। शुद्धप्रेमविना ब्रह्म, कस्यनैव प्रकाशते।१८३॥
शुद्धप्रेमविना बुद्धि—र्नीरसा खेददायिनी। ज्ञात्वैवं हृद्यसत्प्रेम, सेव्यं भक्तैः स्वभावतः॥१८४॥
शुद्धप्रेमप्रभावेण, चित्तैकाग्र्यं भवेद्द्रुतम्। ध्येयस्य स्थैर्यभावाय, शुद्धप्रेमैव कारणम् ॥१८५॥
प्रेम मेघायते विश्वे, प्रेम सूर्यायते स्वयम्। प्रेम चंद्रायते सम्यग्, प्रेमसर्वायते सदा ॥ १८६ ॥
सर्वमिष्टपदार्थेभ्यः प्रेमणिमिष्टताऽधिका। इष्टत्वं चैवमिष्टत्वं, सत्यप्रेमिषुसर्वदा ॥ १८७ ॥
विश्वं सर्वं नमत्येव, पुरः प्रेम्णः स्वभावतः। सर्वत्र प्रेमसाम्राज्यं, पूर्णानन्दं प्रवर्त्तते ॥ १८८ ॥

मनःप्रेममयं कृत्वा, वाचं प्रेममयीं तथा । देहं प्रेममयं कृत्वा, प्रेमिन् ? सर्वत्र संचर ॥१८६॥
मृत्वा पुनर्महाप्रेरणा, जीवन्तः प्रेमयोगिनः । जीवन्मुक्तिः सदेहेऽपि प्रेम्णाऽनुभूयते स्वयम् ॥
अत्रैव परमब्रह्म–साक्षात्कारोऽनुभूयते । शुद्धप्रेमिजनैः सद्यः, कृपां प्राप्य प्रभोर्ध्रुवम् ॥१९१॥
गुरुरेव प्रभुः साक्षा–च्छ्रद्धायां यस्य विद्यते । शुद्धप्रेमोद्भवस्तस्य, जायते नात्र संशयः ॥१९२॥
सत्यप्रेमबलेनैव, सर्वत्र सर्वदेहिनाम् । परस्परं मनः पूर्ण–भेदाऽभावेन वर्त्तते ॥ १९३ ॥
सत्यप्रेम न यत्राऽस्ति, तत्र शङ्का प्रवर्त्तते । संशयात्मा भवेन्नष्ट–आत्मनः सर्वशक्तितः ॥१९४॥
प्रेमधर्मेण विश्वैक्यं, साध्यते नाऽत्र संशयः । नान्योपायाः प्रवर्त्तन्ते, बाह्यभेद विनाशकाः ॥१९५॥
सर्वदेशीयलोकेषु, शुद्धप्रेमप्रवर्त्तनात् । सर्वदेशेन विश्वैक्यं, जायते विश्वशान्तिदम् ॥१९६॥
[illegible] कुरु प्रेम, भव्यविश्वासभावतः । आत्मैव सर्वथा सेव्यः, स एव सर्वतो महान् ॥१९७॥
[illegible], शुकिं प्राप्ता जना भुवि । अतः सर्वात्मसु प्रेम, कुरुध्वं प्रेमयोगिनः ? ॥१९८॥
[illegible], [illegible]पेक्षया । प्रेमैव सद्गुरुं देवं, भजन्तु सर्वशक्तितः ॥१९९॥
[illegible] हुतम् । आत्मैष तेन लब्धव्यः, प्रेमधर्मसमाधितः ॥२००॥

आगच्छन्तु जनाः सर्वे, शुद्धप्रेमणि वेगतः। चिरं विहृत्य सत्प्रेम्णि, भवामः सुखिनः सदा ।२०१।
सार्द्धं संमील्यगच्छेम, स्वादैक्यस्वरूपतः। प्रेमगानानि गायेम, महावीरप्रभोर्मुदा ॥२०२॥
बहिरन्तर्महावीरं, पश्येम प्रेमभावतः । व्रजेम श्रीमहावीरं, बाह्याध्यासवियोगतः ॥२०३॥
महावीरस्य वृत्तान्तं, ध्येयं गेयं सुरागतः। सर्वतीर्थङ्करा गेया–स्तद्भक्ताश्च गुणाकराः ॥२०४॥
पूजादिषु जिनेन्द्राणां, साधूनां दर्शने तथा। रोमाञ्चाश्रु महाहर्षो–जायते प्रेमिदेहिनाम्॥२०५॥
तर्कवादविवादांस्तु, त्यजन्ति प्रेमयोगिनः। महावीरप्रभौ लीना–भवन्ति पूर्णभावतः ॥२०६॥
भेदाऽभावेन भक्तेषु, रक्ताः प्रेमप्रकाशनम्। कुर्वन्ति सद्गतिं यान्ति, प्रेमिणामीदृशी गतिः ॥
कामदुष्टविकाराणां, वासनानां च सर्वथा। होमं कुरु विवेकेन प्रेमाग्नौ भव्यमानव ? ॥२०८॥
सर्वैकान्तिकधर्मेषु, दर्शनेषु च भेदता । सविकल्पं मनो यत्र, तत्रानन्दो न विद्यते ॥२०९॥
शुद्धप्रेममये धर्मे, धर्मभेदो न विद्यते। दर्शनानां विकल्पोऽपि, तत्र किञ्चिन्न जायते ॥ २१० ॥
शुद्धप्रेममये धर्मे, महावीरस्य शासने। सर्वदर्शनधर्माणां, समावेशो भवेत्सदा ॥ २११ ॥
शलभानां यथा वह्नौ, पातः स्वाभाविको भवेत्। प्रेमज्योतिषि भक्तानां, मनःपातस्तथा भवेत्

ॐ ह्रीँ श्रीँ क्लीँ महावीर ! शुद्ध प्रेम प्रकाशक ? प्राकट्यं प्रेमधर्मस्य, मद्धृदि

ॐ ह्रीँ सद्गुरुदेवाय, नमोऽर्हं सत्यवादिने । मत्त्वत्तत्क्लेदनाशेन, द्रुतं प्रेमोद्

षट् चक्रेषु महामन्त्र—जापेन देवदर्शनम् । पूर्वजन्मादिबोधश्च, जायते प्रेम

बालहत्यादिकं पापं, नश्यति मन्त्र जापतः । प्रेमयोग्यं महामन्त्र—मित्येवं ह्र

षट्चक्राधिपदेवाय, शुद्धप्रेमस्वरूपिणे । महाज्योतिः स्वरूपाय, नमः प्रेम्णो

इत्येवं मन्त्रजापेन, प्रेम्णः सिद्धिर्भवेद्धृदि । सद्गुरोर्गमयोगेन, चात्मज्ञानिमन

सद्गुरुप्रेमिभक्ताय, कामभोग विरागिणे । प्रेमगीता शुभा देया, प्रेमगीतार्थ

नास्तिकाय न देया सा, श्रद्धाहीनाय नोकदा । न च देया विधर्मिभ्यः, प्रेमगी

दत्तायां प्रेमगीताया—मयोग्याय पदे पदे । बालहत्यादि दोषाः स्यु—र्दातृणां

कृत्वा शिष्यश्च सद्भक्तं, सद्गुरुभिः प्रतिज्ञया । प्रेमधर्मः प्रदातव्यः, सर्वधर्म

श्रद्धायुक्ता जनाः सर्वे, प्रेमधर्माधिकारिणः । मातृगुर्वादि सद्भक्ता—नीतिमाग

महावीरस्य भक्तानां, प्रेमधर्मप्रवर्त्तनम् । भविष्यति कलौ ह्यं, सर्वसंसार

गुरुपरंपरा प्रेम–धर्मः कलौ चलिष्यति। शीघ्रं कर्मादिमार्गेभ्यो–मुक्तिदः सर्वदेहिनाम् ॥२२५॥
सद्गुरोः प्रेमिभक्तानां, प्रेमगीताप्रवाचनम्। श्रवणं च फलेच्छीघ्रं, यथानुक्रमशिक्षणात् ॥२२६॥
भव्यौत्सुक्यं भवेद्दिव्यं, सत्प्रेमिणां परस्परम्। अत्यसह्यवियोगोऽस्ति, मूर्च्छना चोन्मनीदशा ॥
परस्परेषु चित्ताना,–मान्तरत्राटको भवेत्। बाह्यश्चदर्शनोत्कंठ–प्रेमिणां बाह्यचक्षुषाम् ॥२२८॥
नेत्राश्रुरोदनं दिव्यं, विशुद्धप्रेमिणां खलु। महावीरप्रभौ त्यागः, सकाममनसो भवेत् ॥२२९॥
महावीर जिनेंद्रस्य, दर्शनायाऽऽतुरंमनः। कोटिवर्षसमंतस्य, क्षणोऽपि जायते हृदि ॥२३०॥
अन्यन्नेच्छति तच्चित्तं, महावीरप्रभुं विना। स्वप्नेऽपि दर्शनं कृत्वा, परमानन्दभाग्भवेत् ॥२३१॥
देहादीनां विनाशोऽपि, भक्तानां तृणवद्भवेत्। अग्निःशीतायते तेषां, शुद्धप्रेमप्रवाहतः ॥२३२॥
बुद्धितोऽपिस्वभावेन, प्रेमिणां हृदयं महत्। चञ्चला क्षणिका बुद्धिः, स्थिरं हृत्प्रेमभाजनम् २३३
सर्वविश्वस्व रूपश्री–महावीरस्य भक्तराट्। तन्मयो भवति प्रेम्णा, जीवन्मुक्तोऽभिधीयते २३४
मुक्ति रत्रैवभक्तानां, सदेहेप्यनुभूयते। अत्र नैवास्ति नाऽमुत्र, ज्ञातव्यं शुद्धधर्मिभिः ॥२३५॥
सद्गुरोराज्ञयाप्रेमि–भक्तानां वर्त्तनं शुभम्। गुरोराज्ञैवसद्धर्मः, प्रेमिणांमतिरीदृशी ॥२३६॥

प्रेमैव जीवनं दीव्यं, स्वर्गश्च स्वर्गिणामिदम् । व्यापकः सूक्ष्मरूपेण, प्रेमाऽस्तिसर्वदेहिषु ।२३७।
उन्मनीभावमापन्नाः, संसारोत्पथवर्त्तिनः । मुक्तये सन्तु सद्भक्ताः, शुद्धात्मप्रेमजीवनाः ॥२३८॥
प्रेमाविर्भावकृत्याय, शुद्धात्मप्रेमयोगिनाम् । कर्त्तव्या सङ्गतिः सर्व–स्वार्पणेन तदार्थिभिः ।२३६।
स्वार्पणेन सदा सेव्यः, शुद्धात्मप्रेमिसद्गुरुः । सद्गुरुशिष्ययोरैक्यं, प्रेमैव ज्योतिरात्मनाम् ।२४०।
यस्याग्रे कामदेवस्य, बलं नश्यति तत्क्षणम् । आविर्भवतु तत्प्रेम, येन स्यात् प्रभुदर्शनम् ॥२४१॥
शुद्धप्रेम महाज्योतिः, परब्रह्मैव केवलम् । तेजस्सु तन्महातेज–एकं विश्वस्य शासकम् ।।२४२॥
कायनाशोऽस्ति सत्प्रेम्णा, पूर्णसत्यंवदाम्यहम् । काम्येभ्यो दूरवासेन, नास्ति कामस्य संक्षयः॥
ब्रह्म पश्यतिसत्प्रेम, कामस्तु देहरूपताम् । सत्प्रेम्णा वर्त्तते शान्तिः, कामात्तु दुःखराशयः।२४४।
आत्मसु प्रेमसाम्राज्यं, देहे कामस्य च स्फुटम् । आत्मप्रेम्णारसानन्दः, कामेन दुःखकोटयः२४५
कामात्मा तु पशुर्ज्ञेयः, प्रेमात्मा तु पशोः पतिः । पशुपतिर्महादेवः, केवलज्ञानलिङ्गवान् ॥२४६॥
कामरागसमं दुःखं, नैवभूतं भविष्यति । चिन्तनाद्धरते चित्तं, कामभोगस्य का कथा ॥२४७॥
कामभोगस्य चिन्तातः, कामिनां दुःखकोटयः । देहादीनां च नाशोऽस्ति, मनुष्याणां परस्परम् ॥

काम एव महामृत्युः, सत्प्रेमैवास्ति जीवनम्। मेरुसर्षपयोस्तुल्य-मन्तरं प्रेमकामयोः ॥२४६॥
सर्वान्तर्यामि सत्प्रेम, प्रभुरेवहृदि स्थितम्। परब्रह्म परं पूज्यं, चायिकं सच्चिदात्मकम् ॥२५०॥
शुद्धनिश्चयसत्प्रेम, शुद्धात्मैव न भेदता। वीतरागो रसेन्द्रं तं, याति निश्चयबुद्धितः ॥२५१॥
ब्रह्मविष्णुमहेशाद्याः, कर्मप्रकृतिसंश्रिताः। शुद्धात्मदिव्यसत्प्रेम, वाञ्छन्ति पूर्णभावतः॥२५२॥
शुद्धप्रेममयं पूर्णं, कर्मातीतं रसं परम्। प्रकृतेः पारगन्तारो-यान्तिःशुद्धात्मभावतः ॥२५३॥
प्रेमिणां चक्षुषि प्रेमी, तथा निद्रा न चक्षुषि। जाग्रद्भूत्कर्णयोः प्रेम, तेषां सर्वमलौकिकम् ॥२५४॥
ध्येयरूपप्रभुं प्रेमी, सोऽहं सोऽहं भजेद्धृदि। श्वासोच्छ्वासैः सदा हंसो-जप्यते तेजसां निधिः२५५
प्रेमिणां प्रेमिभिर्दत्तं, प्रियं भवति सर्वथा। प्रेमिणां जन्मवासादि, प्रियं भवति स्वात्मवद् ॥२५६॥
अग्नेरपिमहाग्नि र्यद्-जलादपिमहाजलम्। पृथ्व्या अपि महापृथ्वी, वायुर्वायोर्महानपि ॥२५७॥
आकाशतो महाकाशं, प्रेमिषु प्रेम बोधत। यस्य सत्ताप्रभावेण, सर्वं विश्वं प्रवर्त्तते ॥२५८॥
मैत्रीप्रमोदमाध्यस्थ्य-कारुण्यभावनाः शुभाः। प्रेमिणां प्रेमसिद्धास्ता-वर्त्तन्ते विश्वशांतिदाः॥
प्रेमिणामन्तरानैव, स्थीयते प्रेमिणा कदा। प्रेमिणमन्तरानैव, जीव्यते प्रेमिणा कदा ॥२६०॥

प्रेमिणां विरहो नैवं, सह्यते प्रेमिभिः कदा। यत्र प्रेम भवेत् तत्र, प्रेमिणा मात्मजीवनम् ॥२६१॥
प्रेमाद्वैतं भवेत्सर्वं, प्रेमिणां संगमे सदा। प्रेमाद्वैतमयेजीवे, द्वैतं नास्तीति सम्मतम् ॥२६२॥
प्रेमाद्वैतं विना सर्वं, द्वैताद्वैतं च कल्पितम्। ब्रह्माद्वैतमपि प्रेमा-द्वैताद्भिन्नं न भासते ॥२६३॥
विशिष्टाद्वैत ब्रह्मापि, शुद्धाद्वैतं तथा स्वयम्। प्रेमाद्वैते लयं यान्ति, साक्षात् स्वेनानुभूयते ।२६४।
आविर्भावस्तिरोभाव-प्रेमैव जैनशासनम्। अद्वैतं केवलब्रह्म, प्रेमाद्वैतमनादितः ॥२६५॥
दिव्यं नैसर्गिकं प्रेम-साम्राज्यं सर्वतो महत्। यद्विना चक्रवर्त्याद्या-दुःखिनः सन्ति भूतले ॥
बाह्यसाम्राज्यमात्रेण, सुखं नास्ति मनीषिणाम्। आन्तरप्रेमसाम्राज्या-दानंदः प्रेमदेहिनाम् ॥
किं लक्ष्म्या किं च राज्येन, किं भवेद् बाह्यविद्यया। शुद्धात्मप्रेमसाम्राज्यं, विना सर्वं हि निष्फलम्
शुद्धप्रेम न यत्राऽस्ति, तत्र वासेन किं फलम्। शुद्धप्रेम विना सर्वं, श्मशानं दृश्यमात्रकम् ।१६६।
शुद्धप्रेम विना धर्म-शास्त्रं शस्त्रायते भुवि। शुद्धप्रेममयो धर्मो-जैनधर्मः स उच्यते ॥२७०॥
शुद्धप्रेमैव वैराग्य-रंगो यस्य भवेद्धृदि। तस्य सत्यं भवेत्सर्वं, मनोवाक्कायमात्रजम् ॥२७१॥
किमाहारविहारेण, किं क्रीडाभिः परस्परम्? पुरुषाणां स्त्रियां सत्य-प्रेम यत्र न हार्दिकम् ।२७२।

किं कलाभिः कथाभिः किं, यौवनेन च किं फलम् ! किं फलं भोगसामग्र्या ? शुद्धप्रेमोद्भवं विना ॥
वधूभिश्च वरैः किं स्यात् ? हर्म्यवासेन किं फलम् ? सत्यप्रेम न यत्राऽस्ति, श्मशानं तत्र चिन्तया ॥
सर्वकर्त्तव्यकार्याणां, प्रवृत्तेः प्रेमशुद्धता । नीतिमार्गप्रवृत्तेश्च, शुद्धप्रेमोद्भवो भवेत् ॥ २७५ ॥
...यपापादितत्त्वानां, मन्तारः प्रेमदेहिनः । आत्माभिमुखभावेन, परात्मानो भवन्ति ते ॥२७६॥
...नीरस्य भक्ताः स्यु-र्मार्गानुसारिदेहिनः । आत्मान आन्तरास्तेस्युः, सम्यक्त्वप्रेमजीवनाः
...हा अपि निर्देहा-आत्मानः सन्ति सत्तया । अज्ञानमोहनाशेन, भवन्ति परमेश्वराः ॥२७८॥
व्यभिचारादि दुष्कर्म, भवेत् कामातिरेकतः । शुद्धप्रेमणितद्बंधः, कदापि नैव वर्त्तते ॥ २७६ ॥
...मुख्यः, कदा मोहोऽविवेकतः । कुत्र सत्प्रेमयोगस्य, मुख्यता वर्त्तते कदा ॥२८०॥
...धात्, सत्यप्रेम प्रजायते । मनुष्यत्वं भवेत्प्रेम्णा, पशुत्वमन्यथा स्मृतम् ।२८१।
...साहाय्यं च परस्परम् । जायते सत्यरागेण, विश्वसेवाविचारणा ॥ २८२ ॥
...-मास्यनेत्रप्रसन्नता । वाग्माधुर्यं च सत्कारो-जायते हि परस्परम् ॥२८३॥
...सौ, प्राणार्पणं परस्परम् । कीर्त्तीहा न भवेन्नृणा-मात्मारामनिवासिनाम् २८४

हृच्छेदो न भवेन्नृणां, मृत्यु प्राप्तावपि स्फुटम्। प्रेमिणामीदृशीरीतिः, सुखे दुःखे च सर्वदा॥२८५॥
आलंबनं स्वभावेन, प्रेमिणांहि परस्परम्। जायते सत्यमाधुर्यं, प्रेमरूपं च हृद्गतम् ॥२८६॥
तीर्थं प्रेममयं चित्तं, तीर्थं प्रेममयं वचः। तीर्थं प्रेममयोदेह-आत्मातीर्थं सनातनम् ॥२८७॥
मूर्तिपूजाप्रचारस्य, मूलं सत्प्रेम बोधत। जडेष्वापि प्रभुः साक्षात्-कारस्तस्माद्भवेद्ध्रुवम् ॥२८८॥
शुद्धप्रेमातिवेगेन, मूर्तौ देवस्य दर्शनम्। जायते प्रेमिभक्तानां; श्रूयते सत्यदेशना ॥ २८९ ॥
सत्यप्रेमाश्रये देहे; मानसेचात्मदेहिनाम्। व्यक्तप्रेमोद्भवोनित्यो-जायते नैव संशयः ॥२९०॥
कृतकोट्यपराधास्तु, मनुष्ये द्वेषमोहतः। सत्यप्रेमणि संजाते, उपशाम्यति वेगतः ॥ २९१ ॥
यस्योपरिभवेत्पूर्ण-सत्यप्रेमस्वभावतः। तदर्थं नामरूपादि-स्वार्पणं जायतेरयात् ॥ २९२ ॥
शुद्धप्रेम विना मूर्तौ, शास्त्रस्य ज्ञानमात्रतः। नीरसशुष्कता योगा-दिष्ट देवो न दृश्यते ॥२९३॥
सदेहेषु भवेत्प्रेम, तत्राश्चर्यं न जायते। ज्ञानिनां मूर्तिषु प्रेम, जायते तत्र चित्रता ॥ २९४ ॥
निर्दोषं बालवद्वृत्तं, प्रेमिणः सरलाशयात्। आर्द्रतामयसर्वांगं, तस्य पूर्णं विराजते ॥ २९५ ॥
प्रेमप्रकृतितस्तुल्यं, धर्म्यलक्ष्मं विवेकिनाम्। कल्पते स्त्रीपुरुषाणां, समाचारविचारिणाम् २९६

राजसानां समं लग्नं, राजसं परिकीर्त्तितम्। तामसानां समं लग्नं, तामसं परिकीर्त्तितम्॥२६७॥
सात्विकेन समं लग्नं, सात्विकस्य सुखाप्तये। गुणकर्मानुसारेण, वर्णानां लग्नमिष्यते॥२६८॥
लग्नं समानवर्णानां, वयः साम्यादितः स्मृतम्। देहलग्नं च दंपत्यो–रध्यात्मं प्रेमयोगतः॥२९९॥
आहारेण विचारेण, राजसादिकसाम्यतः। लग्नमाध्यात्मिकं बाह्यं, दंपत्योः सर्वशक्तये॥३००॥
लग्नं प्रेमविना नैव, घटते नरयोषिताम्। भूमिकां पञ्चमींयावद्, दंपत्यो र्लग्नमिष्यते॥ ३०१॥
रोगदोषाद्यभावेन, पक्ववीर्यादितस्तथा। प्रेमादिगुणयोगेन, लग्नं हि नरयोषिताम्॥ ३०२॥
धर्मदेशप्रगत्यर्थ–मित्थं लग्नं समानकम्। कल्पते नरनारीणां, धर्मप्रेमविधायकम्॥ ३०३॥
दुष्टविक्रयलग्नेन, पुरुषाणां च योषिताम्। धर्मसंघ बलादीनां, नाशः स्यान्नैव संशयः॥३०४॥
लग्नमावश्यकं ज्ञेयं प्रजोत्पत्यादिहेतुभिः। अन्यथा देहलग्नंतु, कल्पते नैव देहिनाम्॥३०५॥
कल्पते प्रेमिलोकाना–मात्मलग्नं परस्परम्। देहभोगो न तत्रास्ति, सद्गुणानां प्रचारता॥३०६॥
आत्मप्रेमैवलग्नाय, कल्पते नरयोषिताम्। आत्मलग्नंतु सर्वेषां, कल्पते प्रेमदेहिनाम्॥३०७॥
देवलग्नं गुरोर्लग्नं, शुद्धप्रेम्णा प्रकल्पते। भक्तानां नरनारीणां, मुक्तये धर्मभावतः॥३०८॥

समाख्यं शुद्धचारित्रं, धर्मलक्ष्मं मनीषिणाम्। मोचार्थं जायते नूनं, शुद्धप्रेम निवासिनाम् ॥३०९॥
ॐ ह्रीँ श्रीँ क्लीँ परप्रेम, प्रियेषु मम वर्धताम्। वैरिणामुपरिप्रेम, वर्धतां मम शक्तितः ॥३१०॥
वर्धतां मम मित्रेषु, शत्रुषु प्रेम वेगतः। सर्व देशेषु खंडेषु, शुद्धप्रेम प्रवर्धताम् ॥ ३११ ॥
शुद्धप्रेम्णा पराशान्ति–र्भूयात् सर्वत्र सात्विकी। द्वेष्येष्वपि परप्रेम, वर्धतां मम भावतः॥३१२॥
परप्रेममयं विश्वं, भूयात् संकल्पशक्तितः। प्रादुर्भवतु सत्प्रेम, मयि सर्वेषु सर्वथा ॥ ३१३ ॥
शुद्धप्रेमसमावेग–दृढसंकल्पभावनाः। जनोपरि प्रकुर्वन्तः, कुर्वन्ति प्रेमिणो जनान् ॥३१४॥
नृणां शीर्षोपरिप्रेम–मंत्रजापक योगिनः। वशीकुर्वन्ति सत्प्रेम्णा, सर्वलोकान् विवेकतः ॥३१५॥
मदीयप्रेमदार्ढ्येन, मद्रूपाः सन्तुदेहिनः। दूरं यातु महावैरो–मत्तश्च सर्वविश्वतः ॥ ३१६ ॥
शुद्धप्रेम विना जीवः, पशुरेव न संशयः। शुद्धप्रेमात्मनां नृणां, देवत्वं परिकथ्यते॥ ३१७॥
प्रेम्णा सर्वात्मनामेको–विश्वात्मा परमेश्वरः। आत्माऽद्वैतस्वरूपेण, कथ्यते नययुक्तितः ॥३१८॥
सत्यद्वैतमपिव्यक्त–मात्मा ऽद्वैतेलयं व्रजेत्। ज्ञानेज्ञेयस्य भास्यत्व मात्माद्वैत मनादिकम् ।३१९॥
सोऽहंनैवभवेत् साऽह–मद्वैतप्रेम्णि संस्थिते। जन्ममृत्युर्जरानैव, निर्विकल्पक योगिनाम् ।३२०।

साऽहंसाऽहं भवेत् सोऽहं, भवेत् तत्त्वमसि स्वयम्। त्वमेवाऽहं विकल्पेन, विकल्पप्रेम जायते ॥
व्यक्ताव्यक्तं भवेत्प्रेम, व्यक्ताव्यक्तात्म भावतः। शुद्धप्रेमात्म चारित्रं, सत्यभक्तस्य लभ्यते ॥
प्रेमीप्रेमैव जानाति यत्र तत्र यदा तदा। साद्धि परस्परं चित्तं, प्रेमिणां जायते स्वतः ॥३२३॥
शुद्धोपयोगप्रेमैव, कर्त्तव्यो भक्तयोगिभिः। आत्मशुद्धोपयोगस्तु शुद्धप्रेमैव बोधत ॥३२४॥
शुद्धप्रेमाभिषक्तानां, मालिन्यं नैव जायते। निपातो न भवेत्तेषां, यादृक् तादृक् प्रवृत्तितः॥३२५॥
शुद्धप्रेमैव संबोध्यं, स्वात्मलालन जीवनम्। भक्तसंगेन संप्राप्यं, पूर्णानन्द स्वरूपकम् ॥३२६॥
शुद्धप्रेम न संप्राप्यं, देहाध्याससमृतिं विना। नामरूपादिमोहस्य, नाशेन लभ्यते जनैः ।३२७।
संत्यक्तसर्वसंकल्पो—देहाध्यासविवर्जितः। सर्वकर्माणि कुर्वन्सन्, प्रेमात्मा नैव लिप्यते ॥
यदाकर्मस्वनासक्त—इन्द्रियार्थेषु सर्वथा। अहं ममत्व संत्यागी, शुद्धप्रेमी तदोच्यते ॥३२९॥
कर्त्तव्येष्वधिकारोऽस्ति, प्रेमात्मनां स्वभावतः। अप्रेमात्मा न निर्लेपो—भवत्येव प्रभोर्मतः ।३३०।
प्रेमतः सर्वकर्त्तव्य—सामर्थ्यं जायते हृदि। अनन्तवीर्यसद्रूपं, प्रेमकर्मकरं मतम् ॥ ३३१ ॥
सर्वयज्ञस्वरूपोऽस्ति, प्रेमयज्ञः सतांमतः। प्रेमयज्ञे निमग्नाना—मन्ययज्ञो न विद्यते ॥३३२॥

शुद्धप्रेम महायज्ञे, ज्ञानाग्निदीपिते शुभे । नामरूपादि मोहस्य; होमः कार्यो मनीषिभिः ॥३३३॥
स्वार्थकीर्त्यादि होमेन, शुद्धप्रेमी भवेज्जनः। सर्वकर्माणि कर्तुंस–ईश्वरो भवति स्वयम् ॥३३४॥
शुद्धप्रेममये यज्ञे, भस्मीभूत मनीषिणाम्। दिव्यतेजोमयाश्चित्रा–आत्मानः स्युर्गुणैः शुभाः ॥
शुद्धप्रेमणि संस्नातः, स्नातको योगिभिर्मतः। स्वतंत्रः सर्वथा कर्तु–मकर्तुं विश्वरूपवान् ।३३६।
सदाचारविचारेषु, प्रवृत्तोऽपि स्वभावतः । निर्लेपः स्नातकः प्रेमी, तेन कर्म न बध्यते ॥३३७॥
करोति किं न सत्प्रेमी, व्यक्त प्रेम प्रभावतः । जननी भूमि सत्प्रीत्या, निर्वीर्यो वीर्यवान् भवेत् ॥
गुरुप्रेमी स बोद्धव्यः, कोटिविघ्नैर्न भिद्यते। अन्तश्चक्षुर्भवेत्तस्य, गुरुश्रद्धा न जीवितुः ॥३३९॥
एक एव गुरोः प्रेमी, सर्वज्ञो जायते भुवि । स्ववर्त्मानुगतः सर्वो–जायते व्यक्त शक्तिमान् ॥
सतैव भूमिका बोध्याः, प्रेम्णोऽनुक्रमभावतः। गुर्वाज्ञातोजनैर्धार्याः, स्वाधिकार विशेषतः ।३४१।
आद्यायां भेदरूपेण, स्वार्थ दोषेण मिश्रितम्। काम्यं च भवति प्रेम, सद्दोष द्वेष संगकृत् ॥३४२॥
नामरूपादिषु व्यक्त–काम्यबुद्धिर्भवेत् खलु। जैनधर्मोपरि प्रेम, यमादौ प्रेमता भवेत् ॥३४३॥
फलाशापूर्वकं यत्र; प्रेमिणां प्रेम जायते। द्विष्टेषु वैरबुद्धिश्च, रागस्य क्रयविक्रयम् ॥ ३४४ ॥

कामस्य मुख्यता यत्र, युद्धंच दुष्टवैरिपु । देहेन्द्रियादि भोगानां, सौख्यं प्रकृतिधर्मतः ॥३४५॥
हिंसालीकादि दोषाणां, प्रवृत्तिर्मुख्य भावतः । यमादीनाम भावेन, देव गुर्वादि पूजनम् ॥३४६॥
स्वार्थार्थं सर्व कर्माणि, कर्त्तव्यानि सुखाप्तये । अज्ञानमोह दोषाद्यै—जीवनं यत्र देहिनाम् ।३४७।
द्वितीयायां फलाशाया—मुख्यता कामभोगता । साधूनां संगतेरिच्छा, योगः किंचित्प्रजायते ॥
देहप्राणादितो भिन्न—आत्माऽस्ति देहसंस्थितः । इत्येवं ज्ञायते किंचित्, तत्त्वानां गुरु संनिधौ ॥
स्वार्थार्थं सर्व कार्याणां, प्रवृत्तिर्भेद बुद्धितः । पतिपत्न्यादि सम्बन्धाः, कामरागादिपूर्वकाः ।३५०।
लौकिकाचार नीतीनां, सुखायपालनं भवेत् । दया दाक्षिण्यसञ्चारः किञ्चित्किञ्चित्प्रजायते ॥
आत्मज्ञानाद्य भावेन, देहादीनां प्ररक्षणम् । बाह्य देहेन संबन्धो—नच रागेण रागिणाम् ॥३५२॥
तृतीयायां भवेदन्त—श्चित्तरागप्रसन्नता । प्रेमिणां गौणभावेन, संबन्धः प्रेमिदेहिषु ॥३५३॥
मुख्यभावेन देहस्य, भोग सौख्य प्रवृत्तयः । आत्मनो जडवस्तूनां, सुखे मिश्र प्रवृत्तयः ॥३५४॥
प्रकृतीनां बलेनैव, यत्र बाह्य प्रवृत्तयः । देवादिषु भवेत्प्रेम, गौणभावेन रागिणाम् ॥३५५॥
मिश्रबुद्धिर्भवेद् यत्र, ब्रह्मज्ञानं न जायते । तथापि जैन शास्त्राणां, स्वाध्यायादि प्रवृत्तयः ॥३५६॥

लग्नादि सर्व संबन्धा-भवन्ति स्वार्थ मिश्रिताः। नो पारमार्थिकी बुद्धि-रेकैव तत्र विद्यते ॥३५७॥
चतुर्थ्यां भेद बोधेन, प्राकट्यमात्मनः स्फुटम्। जायते सत्य रागस्य, मुख्यता प्रेम योगिनाम् ॥
महावीरोपरिप्रेम, जायते सद्गुरौ तथा। जैनधर्मोपरिप्रेम, जायते तत्त्वबोधतः ॥ ३५९ ॥
धर्म्ययुद्धादि कार्याणां, स्वाधिकारप्रवृत्तयः। देवगुर्वादिसंपूजा, सत्यप्रेमप्रवाहतः ॥३६०॥
जैनेन्द्रश्रीमहावीर–धर्मचिह्नस्य धारणम्। मिथ्यात्वकुप्रवृत्तिनां, वारणं प्रेमभावतः ॥३६१॥
देहात्मनोर्भवेद्भेदो–ज्ञानेन तत्र निश्चयः। आत्मज्ञानी भवेत्प्रेमी, देहादिभोग्यपिस्वतः ॥३६२॥
अल्पदोष महालाभ–पूर्वकमात्मबुद्धितः। सर्व कर्त्तव्य कार्याणां, कर्त्ता भवति निश्चयी ॥३६३॥
इच्छायोगस्य मुख्यत्वं, शास्त्रयोगस्य मुख्यता। आन्तराः सर्वसम्बन्धा-मुख्यभावेन रागिणाम् ॥
पंचम्यां वर्त्तते प्रेमी, श्रुतचारित्रदेशतः। प्रवृत्तिधर्मसंसेवी, निर्वृत्तिगौणभावतः ॥ ३६५ ॥
वैरिणां प्रतिकर्मत्वं, जायते प्रेमधर्मिणाम्। सर्वधर्मस्य रक्षार्थं, शुद्धप्रेमोपजायते ॥३६६॥
देहेन्द्रियादि भोगानां, सौख्यस्य गौणता भवेत्। मैत्र्यादि भावनाः सर्वा–जायन्ते यत्र बोधतः ॥
जैनसंघस्य वात्सल्यं, सत्यप्रेम्णा विधीयते। साधूनां श्रावकाणां च, वैयावृत्त्यं स्वभावतः ॥३६८॥

देहिनां सर्वदोषाणां, दर्शनं च प्रकाशनम्। प्राणान्ते विद्यते नैव, गुणानां वर्णनं तथा ॥३६६॥
प्रारब्धकर्मभोक्तृत्वं, यमादीनां प्रपालनम्। स्वार्पणं जैनधर्माय, देवाय गुरवे तथा ॥३७०॥
जैनधर्मस्य स्वीकारः, स्वात्मभोगेन पालनम्। जैनधर्म प्रचाराय, कलौप्राणादि दानता ॥३७१॥
प्रशस्याचारनीत्यादि–पालनं शास्त्रयुक्तितः। देवगुर्वादिसंसेवा, वर्णधर्मादिपालनम् ॥३७२॥
नामरूपादि संमोहो–धर्म्यकामोदयस्तथा। देहात्माध्यासताकिञ्चित्, कषायाणां समुद्भवः ३७३
सत्यप्रेमोदयो यत्र, प्रेमिणांहि परस्परम्। भवेद् बुद्धिःस्थिरा शुद्धा, परात्माभिमुखा जनाः॥३७४॥
व्यावहारिक संबन्धे, शुद्धप्रेम प्रजायते। काम्या भवन्ति निष्काम्याः, पदार्था यत्र वस्तुतः॥३७५॥
प्रेमाऽस्ति निन्दके नैव, न तथा दोषदर्शिषु। निर्दयेषु नवै प्रेम, तथा प्रेमविरोधिषु ॥ ३७६॥
गुरुशिष्यादि संबंधाः, सत्यप्रेममयाःशुभाः। पितृपुत्रादि संबंधाः, परस्परोपकारकाः ॥३७७॥
त्यागिनां गृहिणांधर्माः, सत्यप्रेममयाः सदा। सदाचारः स्वभावेन, दयादान प्रवृत्तयः ॥३७८॥
आत्मवत्सर्वजीवेषु, सत्यप्रेमोद्भवो भवेत्। आत्मा विश्वमयः प्रेम्णा, भाति यत्र स्वभावतः ३७९
सोऽहं सोऽहं भवेत् साऽहं, प्रेमिणां च परस्परम्। सर्वभोगेषु निर्लेपः, सत्प्रेमी सर्वकर्मकृत् ॥३८०॥

षष्ठ्यां पूर्णं भवेत् प्रेम, निर्दोषं च मनः सदा। शुद्धात्मबोधरूपं हि, शुद्धप्रेमैव गीयते ॥३८१॥
प्रेमरूपं जगत् सर्वं, शुद्धप्रेम्णा प्रभासते। यत्र वैरी न वैरं न, प्रेमिषु नैव भेदता ॥ ३८२ ॥
दोषा यत्र न भासन्ते, शुद्ध प्रेम प्रवाहतः,। अहिंसादिगुणा यत्र, पूर्ण रूपाः स्वभावतः॥३८३॥
यत्रात्मा परमात्माऽस्ति, शक्तिव्यक्तिमयोमहान्। निरञ्जनं निराकार-मात्मतत्त्वं प्रभासते ३८४
आत्मदृष्टिर्भवेन्मुख्या, व्यापकप्रेमयोगिनाम्। धारणाध्यानलीनानामुन्मनीभावमुख्यता।३८५।
नरो नैव तथा नारी, जातिर्नैव च पौद्गली। अरूपोऽस्ति स्वयंशुद्धः, देहस्थोऽपि न देहवान्।३८६।
कर्मबन्धो भवेन्नैव, कृतेषु सर्वकर्मसु। भवेमुक्तौ समाबुद्धिः, समप्रेमस्वभावतः ॥ ३८७ ॥
अन्तर्बहिर्महावीरः, शुद्धप्रेम्णैव दृश्यते। महावीरमयं विश्वं, यत्र तत्र प्रदृश्यते ॥ ३८८ ॥
आत्मैव श्रीमहावीर–आत्मना परिवेद्यते। शुद्धात्ममग्नतायोगा–दानन्दोहृदि जायते ॥३८९॥
आत्मन आन्तरक्रीडा, बुद्ध्यादिवृत्तिभिः सह। यत्रानुभूयते प्रेम्णा, तत्रदुःखस्य नाम किम् ॥
दोषत्वं नैव कुत्राऽपि, द्रश्यतेऽत्र स्वभावतः। दोषत्वं च गुणत्वं च–आपेक्षिकं न वस्तुतः॥३९१॥
ष्यादिभेदस्तु, किञ्चिन्नैवात्र विद्यते। शुद्धप्रेमपरब्रह्म, सर्वत्रैक्यं प्रकाशते ॥ ३९२ ॥

एक एव महावीरो–जिनेन्द्रः परमेश्वरः। महाभक्तस्य हृद्येव भाति विश्वमयः प्रभुः ॥ ३९३ ॥
शुद्धप्रेम्णा महावीरः, शुद्धात्मैव स्वयंभवेत्। अप्रमत्तः सदाजाग्रत् ज्योतिषांद्युतिभास्करः ॥
आचाराणां विचाराणां, नैयत्यं नैव वर्त्तते। सर्वं कर्तुमकर्तुं यः, समर्थो जिनरागवान् ॥३९५॥
निर्गतः शास्त्रसंज्ञातो–लोकसंज्ञाविनिर्गतः। देहसंज्ञाद्यभावेन, शुद्धप्रेमीप्रभुःस्वयम् ॥३९६॥
साकारश्चनिराकारः, शुद्धात्माहृदि भासते। शुद्धात्मैवपरप्रेम, पूर्णशक्तिमयः प्रभुः ॥ ३९७ ॥
जीवन्मुक्तो भवेच्छुद्ध–प्रेमीसर्वत्रसर्वदा। नामरूपादिमोहस्य, नाशोभवति सर्वथा ॥३९८॥
अभेदप्रेमसामर्थ्यं, सर्वत्रव्यापकं खलु। सविकल्पपरप्रेम, पूर्णानन्दमयं सदा ॥ ३९९ ॥
यत्रैक्यं परमप्रेम–भावेनसर्वदेहिषु। निष्कामप्रेमशुद्धात्मा पूर्णानन्दोरसात्मकः ॥ ४०० ॥
सूक्ष्मकामादिसंकल्पः, किञ्चिद् भवति नोकदा। सप्तम्यां भूमिकायां च, निर्वाच्यं प्रेमवस्तुतः
सत्प्रेमैवकलौ मोक्षः, सत्प्रेमपरिभाषया, अप्रमत्तदशां यावत्, शुद्धात्मप्रेम योगिनाम् ॥४०२॥
अप्रमत्तदशा जीवन्–मुक्तिरेवकलौशुभा। अप्रमत्तदशां यावत्, सत्प्रेम्णः सप्तभूमिकः ॥४०३॥
अप्रमत्तदशाशुद्ध–प्रेममुक्तिर्मनीषिभिः। अत्रैव वेद्यते साक्षात्, तत ऊर्ध्वं न वेद्यते ॥ ४०४ ॥

आत्मानुभवमोक्षोऽत्र, भाषितंपरिभाषया। अप्रमत्तगुणस्थानं, यावत् भक्तिमहत्तया ॥४०५॥
अप्रमत्तदशाशुद्ध–प्रेमोर्ध्वं पूर्णशुद्धता। जायते तीर्थं देवानां, केवलज्ञानयोगतः ॥ ४०६ ॥
अष्टम्यां शुक्लयोगेन, शुद्धचारित्रयोगिनः। घातिकर्मक्षयान्मोक्षः, शुद्धपर्यायवान् भवेत् ॥
अष्टम्यां तीर्थकृद्देवः, केवली विश्वदेशकः। परमात्मा जिनेन्द्रः स–जायते विश्वपावकः॥४०८॥
सर्वांशेन भवेद् जीवन्–मुक्तः सर्वज्ञ योगिराट्। अष्टमीं भूमिमुल्लंघ्य, भवेत् सिद्धो निरञ्जनः॥४०९॥
परब्रह्ममहावीरे, तन्मया प्रेमभावतः। पश्यन्ति ते द्वयोरैक्यं, मुक्ता भवन्ति सत्वरम् ॥४१०॥
धनपुष्पादिना नैव, प्रभुप्राप्तिः कदाचन। प्रभुप्राप्तिः परप्रेम्णा, प्रभुजीवन जीविनाम् ॥४११॥
महावीरस्य भक्तानां, प्रेमिणां शुद्ध निश्चयात्। नैवजातिस्तथालिङ्गं, नामरूपे न वेयता ॥४१२॥
गुरुरेव प्रभुः साक्षात्, प्रभुरेव गुरुः स्वयम्। प्रभुरूपं जगत् सर्व–मितिप्रेमी विलोकते ॥४१३॥
भक्तानां रोदने हास्ये दिव्यानन्दोद्भवः स्फुटः। पूज्यानामान्तरं वाह्य–मिष्टं स्यात् प्रेमदेहिनाम्
सद्गुरोर्जन्म वृत्तान्त स्थानादिकं सदा प्रियम्। जायते प्रेमिभक्तानां, यत्र तत्र स्वभावतः॥४१५॥
जीवने न स्पृहाकिञ्चित्, मृत्योर्भीतिर्नजायते। भक्तानां वस्त्रवद्देह–धारणत्यजनं तथा ॥४१६॥

विश्वोद्धाराय सत्प्रेम-प्रभुः स्यात् स शक्तिमान् । खण्डदेश समाजाना-मैक्यं साधयति स्वयम्
शुद्धप्रेम न यत्राऽस्ति, तत्र पापतमो महत् । शुद्धप्रेम न यत्राऽस्ति, तत्राऽधर्म प्रवृत्तयः ॥४१८॥
शुद्धप्रेम भवेद् यत्र, तत्र व्यक्तः प्रभुः सदा । दयासत्यादि धर्माणां, तत्रवासोऽस्ति सर्वथा ॥४१९॥
शुद्धप्रेमविना शुष्कं, चित्तं सर्वमनीषिणाम् । शुद्धप्रेम्णा जगत् सर्व-मात्मरूपं प्रभासते ॥४२०॥
सर्वेषां हृदयैः सार्द्धं, भक्तानामेकता भवेत् । भक्तानां हृत्सु व्यक्तोऽस्ति, महावीरः प्रभुः सदा ४२१
पश्यन्तु प्रेमिहृत्स्वेवं, प्रभुवीरं जिनेश्वरम् । जाग्रत् प्रभुर्जनैर्द्रष्टयो-भक्तानां देहमंदिरे ॥४२२॥
व्यक्त जाग्रत् परब्रह्म-जिनेन्द्रस्य सुभावतः । आरात्रिकं प्रकुर्वन्ति, प्रेमिणा आन्तरं स्वतः ॥४२३॥
विश्वस्थाल्यां रविश्चंद्रो-दीपकावेववस्तुतः । केवलज्ञानदेवेन्द्र-मभितो गच्छतः सदा ॥४२४॥
विश्वस्थाल्यां महातेजः, शुद्धप्रेमैवबोधत । देहस्थाल्यां भवेत् दीप-आत्मैव प्रेमजीवनम् ।४२५।
परस्परं तु जीवानां, शुद्धप्रेमैव मंगलम् । भवेदतीव सन्धान-कारकं च मनीषिणाम् ॥ ४२६ ॥
शुद्धप्रेमात्म सद्भक्ता-द्रष्टया वीरस्य भावतः । तेषां पुण्यप्रवाहेण, सुसृष्टि र्भुविमङ्गला ॥४२७॥
संसारे वर्तमानस्य, महावीरे मनः सदा । यस्य स प्रेमभक्तोऽस्ति, निर्लेपः सर्ववस्तुषु ॥४२८॥

शुद्धात्मप्रेमसामर्थ्यात्, चणिकेषु नरागता। तथात्मनो महावीरे, समाधिर्जायते स्वयम् ॥४४१॥
लयंयान्ति महावीरे, मनांसि शुद्धरागिणाम्। स्वयं भूत्वा महावीरा—गच्छन्ति परमंपदम् ।४४२।
त्यजन्तु स्वार्थसंबंधान्, भजन्तु भक्तयोगिनः। आत्मशुद्धिं प्रकुर्वन्तु, शुद्धात्मप्रेमयोगिनः ४४३
शुभाशुभं न दृश्येषु यदाकिञ्चिद् भविष्यति। तदा शुद्धात्मसत्प्रेमी, कर्मयोगी भविष्यसि ४४४
संप्रति विपरीतं त्वं, पश्यसि मोहचचुषा। शुद्धप्रेमणिसंजाते, सत्यं द्रक्ष्यसि सर्वथा ॥ ४४५ ॥
प्रेम्णस्तु वैखरीभाषा, नास्ति सर्वत्रबोधत। तथापि प्रेमभाषाऽस्ति, सर्वत्रैका परात्मिका॥
अन्तर्विशुद्धभक्तानां, जैनानां संगतिं कुरु। नास्तिकाऽधर्मिपापानां, सर्वथा संगतिंत्यज ।४४७।
शुद्धप्रेमणि विचेपं, कर्तॄणां संगतिंत्यज। शुद्धप्रेमविहीनानां, ग्रन्थानां वाचनां त्यज ।।४४८॥
कुरु सर्वत्र सत्प्रेम, स्वार्थमोहं निवारय। शुद्धप्रेम्णा महावीर—जापं कुरु प्रतिचणम् ॥४४९॥
गुर्वाज्ञां मस्तके धृत्वा, सर्वं तस्मै समर्पय। सद्गुरुदेवसेवायां, निःशङ्को भव सर्वथा ॥४५०॥
भवे मुक्तौ च सर्वत्र, समत्वं यस्य जायते। पूर्णशुद्धात्मसत्प्रेमी, कुत्राऽपि नैव लिप्यते ।४५१।
शाब्दिकतार्किकग्रन्थ—कोटिपाठेन किंफलम्? किं तत्त्वशास्त्रपाठेन? महावीरं सदा भज ।४५२।

कर्मणा किंच यज्ञेन, किं विवादेन वाह्यतः? । परब्रह्ममहावीरं, प्रेम्णा भजतमानवाः? ॥४५३॥
जैनधर्मं महावीरं गुरुं च पूर्णरागतः । भज श्रद्धाबलेनैव, सर्वेष्वैक्यं विभावय ॥ ४५४ ॥
भवस्य हेतवो ये ये, ते ते मोक्षस्य हेतवः । भवन्त्यपेक्षया सत्य—प्रेमयुक्तमनीषिणाम् ।४५५।
शुद्धप्रेमात्मनोध्यानं, भवत्येव न संशयः । शुद्धात्मप्रेमलीनस्य, समाधिः सततंभवेत् ॥४५६॥
महावीरो परिप्रेम्णा, लीनानां हि समाधयः । अहर्निशं भवन्त्येव, यत्रतत्र यदा तदा ।४५७।
उच्चनीचादिभेदास्तु, प्रेमौदार्यं विनाभुवि । प्रेमौदार्यं विनाविश्वे, कदापिनैवशान्तिता ॥४५८॥
प्रेमौदार्यं महादानं, प्रेमौदार्यं महत्तपः । प्रेमौदार्यं महा भक्तिः, प्रेमौदार्यं शुभार्जवम् ।४५९।
ज्ञानादिसर्वयोगेषु, रसः सत्प्रेम वर्त्तते । अतःसत्प्रेमयोगेन, हृदि व्यक्तः प्रभुर्भवेत् ॥४६०॥
मधुरंप्रियहृद्यंयत्, तत्प्रेमवानुभूयते । ज्ञानिना व्यक्तभावेन, वैखर्या नैव वर्ण्यते ॥४६१॥
आनन्दोल्लसितं चित्तं, रोगादौ यस्य विद्यते । कीर्त्यादि वासनातीतः, शुद्धप्रेमी स उच्यते ।४६२।
गालीदानादितो रोषो—यस्य चित्ते न जायते । भय दुःखादि वृत्तीनां, जेता प्रेमी महान् स्मृतः ॥
प्रेमाग्नौ स्वार्थ होमस्तु, यत्रनृणां परस्परम् । जायते तत्र शुद्धात्म—व्यक्तीभावो मनीषिणाम् ४६४

कृत्रिम प्रेमचेष्टाभि–र्धूर्तै विश्वं प्रवंचितम्। सावधानतयाभाव्यं, शुद्धात्म प्रेमधारकैः ॥४६५॥
शीताच्छीततरंप्रेम–मिष्टनिद्रा समं शुभम्। प्रेमाग्नौ पतनं याति, प्रेमी शलभवद् स्यात् ॥४६६॥
संज्वलत्परमप्रेम, हृदि यस्य निरंतरम्। तस्य किं कर्मकाण्डेन, वाह्यशौचेन तस्य किम् ।४६७।
जलेऽरण्ये स्थलेद्वीपे, दिनेरात्रौ च देहिनाम्। भक्त्या रक्षेन् महावीरो–जैनेन्द्रः परमेश्वरः॥४६८॥
दोषाः सर्वे गुणायन्ते, वीरस्य प्रेमिणां स्वयम्। दुष्टवृत्ति विजेतारो–जैनाभक्ताः सुरागिणः ।४६९।
शुद्धात्मप्रेमि जैनानां, जन्ममृत्युर्नविद्यते। तेषां कर्माणि मोक्षाय, भवन्ति शुद्धबुद्धितः। ४७०॥
नपुंसक समास्ते स्युः, प्रेमिणो नाममात्रतः। नामरूपादिके सक्ता–धैर्यशौर्ये पराङ्मुखाः ।४७१।
वीरप्रेमावधूतानां, प्रारब्ध कर्मवेदिनाम्। साक्षिणां सुखदुःखेषु, मुक्तिः साक्षात् प्रभासते ॥४७२॥
आत्मा साक्षितया यस्य, सर्वदृश्यादि कर्मसु। शुद्धप्रेम्णा भवेत्तस्य, सिद्धता मुक्तिरूपिणी ४७३
वीरवीरेति सज्जापः, सर्वजाप शिरोमणिः। महावीरेति मंत्रेषु, मंत्रः सर्वार्थसाधकः।।४७४॥
मृत्युकाले महावीर–जापो मुक्तिप्रदः शुभः। घोरातिघोर कर्माणि, नाशयेत् प्रेमयोगिनाम् ४७५
शुद्धप्रेम्णा महावीर–मयः प्रेमीभवेद् ध्रुवम्। वहिरन्तर्महावीरं, विनाकिञ्चिन्न पश्यति ॥४७६॥

कृतकर्म्मानुसारेण, सुखंदुःखं भवेत् सदा। ज्ञात्वैवं प्रेमिणो वीर—वीरेति जापका जनाः ॥४७७॥
शुभार्थं जायते यत्तद्, जानन्ति प्रेमयोगिनः। हर्षशोकं न कुर्वन्ति, कर्मसिद्धांत वेदिनः॥४७८॥
महावीरे प्रलीनस्य, समत्वं सर्ववस्तुषु। जायते मुक्तिदं नित्यं, नाशकं सर्वकर्मणाम् । ४७९॥
ममत्वं जायते यस्य, महावीरप्रभौ दृढम्। सुगुरौ जैनधर्मे च, तस्य मुक्तिर्ध्रुवं भवेत् ॥४८०॥
घोरातिघोरपापानां, महावीरस्यरागतः। मृत्युप्रान्ते भवेन्मुक्ति—र्मुह्यन्ति तत्रनास्तिकाः॥४८१॥
जैनधर्मोपरिद्वेषो, यस्यवीरे गुरौ तथा। नास्तिकेषु महापापी, स याति दुर्गतिं सदा ॥४८२॥
नास्तिकानां प्रतीकारात्, महावीरस्य रागिणः। स्वर्गादिसद्गतिं यान्ति, व्रताद्यै रहिता अपि ॥
धर्मोद्धाराय जायन्ते, शुद्धप्रेमावतारिणः। दुष्टानां सर्वथा नाशं, कुर्वन्ति सर्वशक्तितः ॥४८४॥
पूर्णश्रद्धा सदा कार्या, वीरगुर्वादिके जनैः। श्रद्धामूलं भवेत् प्रेम, जैनधर्मे मनीषिणाम्॥४८५॥
तर्कादिकं न कर्त्तव्यं, महावीर प्रभौ कदा। महावीरोक्ततत्त्वेषु, शङ्का कार्या न रागिभिः ॥४८६॥
तर्कशङ्कादितः श्रद्धा, प्रेमनाशो भवेत् खलु। विवादोऽपि न कर्त्तव्यः, कदापि जैन धर्मिभिः ॥
श्रद्धाप्रेमविनाशाय, कुयुक्तितर्ककोट यः। तत्पारं याति नो कोऽपि, तत्त्वस्य तर्ककोटिभिः ॥

सर्वज्ञः श्रीमहावीरः, सर्वथा सत्यभापकः। पूर्णश्रद्धाबलेनैव, तस्मिन् प्रेम सुखावहम् ॥४८९॥
जैनधर्मसमो धर्मो, नैव भूतो भविष्यति। वेदादनादिकः सत्य–स्तस्यश्रद्धा महाफला ॥४९०॥
तस्य श्रद्धाबलेनैव, पूर्णप्रेम प्रजायते। पूर्णप्रेमबलेनैव, प्रेमी याति परां गतिम् ॥४९१॥
सर्वज्ञ श्री महावीर–देवेन सत्य भापितम्। तद्वाच एव सद्वेदा–स्तस्य श्रद्धैव मुक्तिदा ॥४९२॥
महावीरागमेष्वेव, श्रद्धाप्रेम सुखप्रदम्। सर्वधर्मान् परित्यज्य, वीरस्य शरणं व्रज ॥४९३॥
वीरागमेषु सत्प्रेम, कलौ मुक्तिप्रदायकम्। मुक्तिप्रयुक्तिभिर्भक्ते–रच्या जैनागमाःसदा ॥
जैनसंघोपरिप्रेम, तथा जैनागमोपरि। यस्य स सर्वभक्तेषु, श्रेष्ठस्तस्मै नमोऽस्तुनः ॥४९५॥
अन्तःप्रेम बहिःप्रेम, यस्य प्रेममयं जगत्। तस्यात्मा व्यापको भूयात्, केवलज्ञानतः स्वयम् ॥
धर्मचमाभवेद्यस्य, दुष्टता नैव विद्यते। तस्य भक्तिर्भवेत् सत्या, परमात्मप्रदर्शिका ॥४९७॥
पूर्णप्रामाण्ययोगेन, प्रेमभक्तिः प्रजायते। भक्तिमार्गाधिरोहेण, विनिपातो न जायते ॥४९८॥
प्रत्यवायो न जायेत, भक्तानां धर्मकर्मसु। जैनधर्मबलेनैव, प्रान्ते मुक्तिर्न संशयः ॥४९९॥
पूर्णप्रेम महाभक्ति–र्जैनानां नान्यदेहिनाम्। जैत्रशक्तिविहीनानां, भक्तिर्ज्ञानं न जायते ॥

जैत्रशक्तिर्भवेद्यत्र, तत्राऽस्ति जैनशासनम् । जैत्रशक्तिप्रतापेन, शुद्धप्रेम प्रजायते ॥५०१॥
भक्तानां परिणामेषु, कृत्येषु नैव दोषता । भक्ताः सर्वत्र निर्दोषा, धर्म्यकर्तव्यकारकाः ॥५०२॥
अब्धिवत् पूर्णगंभीराः, क्षुद्रादिदोषवर्जिताः । भक्ता भवन्ति सत्पात्रं, शुद्धप्रेमाधिकारिणः ॥
हठादिसर्वयोगानां, लयो भक्तौ प्रजायते । साधिते भक्तियोगे तु, सर्वयोगाः प्रसाधिताः ॥
सर्वजातीयमंत्राणां, लयोऽस्ति वीरनामनि । सर्वशक्तिसमुत्पत्ति-र्महावीरस्य जापतः ॥५०५॥
सर्वकर्मविनाशोऽस्ति, महावीरेतिजापतः । महावीरप्रभोर्जापे, बुद्धिलक्ष्मीसमृद्धयः ॥५०६॥
महावीरस्य भक्तानां, देवदेवीसहायता । यत्र तत्र भवेद् गुप्त-रूपेण सत्यनिश्चयः ॥५०७॥
दर्शनं देवदेवीनां, वीरभक्तस्य जायते । स्वप्नेऽपि तस्य बोधस्य, प्रदाता सद्गुरुर्भवेत् ॥५०८॥
महावीरप्रभोर्भक्ता-महावीरेतिगर्जनाम् । कुर्वन्ति पूर्णभावेन, वीरकल्याणकोत्सवे ॥५०९॥
जिनेन्द्रश्रीमहावीरे, सद्गुरौ जैनशासने । नामरूपलयं कृत्वा, वर्त्तितव्यं सुरागिभिः ॥५१०॥
पूर्णविश्वाससत्प्रेम्णा, प्रत्यक्षसद्गुरौजनैः । ममत्वस्य लयं कृत्वा, कर्तव्यं कर्म सर्वदा ॥५११॥
सत्कर्तव्योपरिप्रेम, कर्तव्यं शुद्धरागिभिः । यत्र प्रेम भवेत् तत्र, चित्तैकाग्र्यं प्रजायते ॥५१२॥

धर्मोऽकर्पणयोगेन, आत्मा कृष्णोऽम ९ चयम्। निजात्मा वासुदेवोऽस्ति, महावीरः स्वचर्यितः
गोप्यस्तुवृत्तयः सर्वा–स्तासामन्तः प्रपालकः। गोपालः सर्वथात्मैव, न च देहो विनश्वरः॥५१४॥
वज्रादपि कठोराणि, हृदयानि मनीषिणाम्। मृदूनि पुष्पवच्छीघ्रं, भवन्ति प्रेमशक्तितः॥५१५॥
निष्ठुरस्यापि कारुण्य–मज्ञस्यापिप्रकाशता। सर्वात्मसु च सौन्दर्यं, शुद्धप्रेमामृताद् भवेत्॥
आस्तिक्यं नास्तिकस्यापि, शुष्काणामार्द्रता हृदि। शुद्धप्रेमामृतस्वादाद्, जायते स्वीयभक्तितः
यस्यात्मा प्रेमरूपोऽस्ति, तस्य प्रेममयं जगत्। प्रेमात्मा यः स्वयं नास्ति, तस्य शून्यं जगद् भवेत्।
मानवेन्द्राः सुरेन्द्राश्च, दानवाश्चक्रवर्तिनः। वराका इव विज्ञेयाः, शुद्धप्रेमामृतं विना॥५१६॥
सात्त्विकप्रेमसाम्राज्यं, यस्य जीवनताभृतम्। तस्याग्रे निष्ठुर स्वार्थ–दोषा जीवन्ति नो कदा॥
आत्मप्रेम भवेन्नित्य–मानन्दाद्वैतरूपकम्। जडप्रेम भवेद्देह–वित्तादिसंभवं तथा॥ ५२१॥
आत्मप्रेम्णाभवेन्मुक्ति–र्जडप्रीत्या तु संसृतिः। ईश्वरोपासकोह्यात्म–प्रेमीचान्यो भवेज्जडः॥
देहस्य भोगिनो नैव, किन्तु सौन्दर्यभोगिनः। आत्मनां मनसां चैव, ज्ञानाग्निपक्वरागिणः॥
एजते प्रेमतो विश्वं, गुप्तभेदं प्रकाशते। प्रेम्णा विश्वं वशीभूतं, जायते भक्तियोगिनाम्॥५२४॥

शुद्धप्रेम जगत्स्वामी, कोऽपिनास्ति च तत्समः। प्रिय आत्मा प्रभुर्देवः, प्रिय एव जगत् प्रभुः॥
आत्माग्नौ प्रेमिणो भक्ता, पतन्तिशलभा इव। कुर्वन्ति भस्मसात् देहान्, गच्छन्ति परमां गतिम्
यत्र तत्राऽपि सत्प्रेम्णा, प्रभुं मत्वा विवेकिभिः। कर्त्तव्यं तन्मयं चित्तं, ततो व्यक्तः प्रभुर्भवेत्॥
शुद्धप्रेम महायोगो—यस्य वीरोपरिस्फुटः। समाधिस्तस्य भक्तस्य, यत्र तत्र निरन्तरम ।।५२८॥
शुद्धप्रेम महायोगो—यस्य शुद्धात्मनः सदा। वर्त्तते तस्य भक्तस्य—समाधिः स्यादहर्निशम् ५२९
सर्वेषां धर्मिणां धर्मः, सत्प्रेमैव महीतले। सर्वधार्मिक लोकाना—मैक्यं सत्प्रेमतो भवेत्॥५३०॥
जातिलिङ्गादि भेदानां, नाशः प्रेम्णा प्रजायते। सर्वात्मनां भवेदैक्यं शुद्धप्रेमरसाद् ध्रुवम् ५३१
अनेकान्तनये ज्ञाते, शाश्वते जैनशासने। अनेकान्तमहाप्रेम, जायते भेदनाशकम् ॥५३२॥
आत्मरूप महावीर—प्रियस्य पूर्णरागतः। गेयानि सर्वगानानि, सर्ववाद्यैर्जनैः खलु ॥५३३॥
आत्मतानस्य गानेन, तन्मयोगायकोभवेत्। हर्षोल्लासस्ततोवीर—दर्शनं जायते स्फुटम्॥५३४॥
परिणीतपतिर्नार्या—व्यवहारनयात्मतः। परब्रह्म महावीरः, सर्वेषामान्तरः पतिः ॥५३५॥
प्रेमशास्त्रस्य पाठेन, शुद्धप्रेम न जायते। प्रेमिणां संगतेः प्रेम, जायते पूर्णनिश्चयः ॥५३६॥

शुद्धानुभवसत्प्रीत्यां, नास्ति कि योजनम्। नयप्रमाणनिक्षेप—बुद्धिवादस्य वस्तुतः ॥
नचतर्कादिभिः प्रेम, जायते भक्तदेहिनाम् । तर्कवादलयेनैव, शुद्धप्रेम प्रजायते ॥५३८॥
सर्वजातिभयं नास्ति, शुद्धप्रेमाप्ति योगिनाम्। संति नैव कषायाश्च, मिथ्याबुद्धिर्न वर्त्तते ॥
निर्विकल्पात्मरूपस्य, दर्शनं प्रेमभक्तितः। जायते पूर्णभक्तानां, तद्दशा नैव शुष्यते ॥५४०॥
शुद्धप्रेमसमा शक्ति—र्विद्यते न जगत्त्रये। यस्य शक्त्या भवेत् सेवा, विश्वस्य सर्वहोमतः ॥
शुद्धप्रेमसमं मंत्रं, यंत्रतंत्रं न विद्यते। व्यापकं विश्वसत्प्रेम, ब्रह्मप्रेमैव कथ्यते ॥ ५४२ ॥
जीवाजीवादितत्त्वज्ञः, आन्तरप्रेमयोगतः। मृत्युकालेऽपि वीरस्य, स्मृतेर्भक्तः शिवं व्रजेत् ॥
शुद्धात्मप्रेम कुर्वन्तु, भक्ताः प्रेमिसमागमात्। महावीरस्य भक्तानां, तत्प्रेमैव परंतपः ॥
महावीरोपरिप्रेम—मात्रं सर्वं यमादिकं। तद्ध्यानं तत्समाधिश्च, लययोगो भवेत्ततः ॥५४५॥
अभेदप्रेमयोगेन, मानवपशुपक्षिणाम्। देहोत्सर्गात्मिका सेवा, जायते दुःखनाशिका ॥५४६॥
अभेदः सर्वजीवेषु, भवेन्निर्भेदरागतः। पश्चात् सर्वत्र शुद्धात्म—वीर एव प्रदृश्यते ॥ ५४७ ॥
ब्रह्मज्ञानान्महत्प्रेम, जायते दिव्यदेहिनाम्। आन्तरिकसमुत्क्रान्ति—र्जायते च प्रतिक्षणम् ॥

आत्मिकं मानसं प्रेम,जायते ज्ञानचक्षुषाम् । ततो दिव्यसुखास्वादा-दवधूतो भवेज्जनः ॥५४९॥
स्वर्गएवाऽस्ति सत्प्रेम, यत्रतत्रमनीषिणाम् । सत्प्रेमतो विहीनानां, श्वभ्रमेवगृहं वनम् ॥५५०॥
शुद्धप्रेमविना यस्य, मनोराज्यं प्रवर्त्तते । विश्वराज्यस्य संप्राप्तौ, तस्य शान्तिर्न जायते ॥५५१॥
यावद् भौतिकभावेषु, दृढरागोऽभिजायते । तावत् शुद्धात्मसत्प्रीते- रधिकारो न संभवेत् ।
मा पृथ्वीस्वरूपास्ति, सत्यप्रेम विभावय । जलं शान्तिस्वरूपं तत्, सत्यप्रेम हृदि स्मर ॥
नं वह्निस्वरूपं तत्, सत्यप्रेम जगत् प्रभुः । रागादिकर्मणांभस्म-सात्करोतिमनीषिणाम् ।
प्राणं वायुस्वरूपं तत्, सत्यप्रेम महाविभुः । जीवति नैव जीवोऽपि, यं विनात्मस्वभावतः ।५५५।
मात्माकाशस्वरूपोऽस्ति, व्यापकप्रेम बोधत । भूतरूपकसत्प्रेम, तत्प्रतीकं जगत् सदा ॥
[illegible]भास्करसत्प्रेम, तथात्मचंद्ररूपकम् । तारकासंख्यरूपेण, सत्प्रेमात्मा स्वयंसदा ।५५७।
[illegible] सत्यप्रेमबलाज्जनैः । आत्मनोऽनन्तसामर्थ्यं, शुद्धप्रेम्णा प्रकाशते ॥
[illegible] प्रदर्शकम् । स्वातन्त्र्य रक्षकं प्रेम, तदभावे हि शून्यता ।५५९।
[illegible] । सर्वाशाजीवनं प्रेम, यत्रतत्र प्रयत्नता ॥ ५६० ॥

सर्वविश्वैकसाम्राज्यं, शुद्धप्रेम्णः र्त्तते । यस्याग्रे कालचक्रस्य, भयं किञ्चिन्न वर्त्तते ॥
शुद्धप्रेमी स्वमंतव्ये, प्राप्नोति न पराभवम् । प्रेमसंस्कारसामर्थ्यात्, कार्यसिद्धिकरो भवेत् ॥
प्रेमाग्रे हि गिरीन्द्रोऽपि, कम्पते नास्ति संशयः । अशक्यमपि सत्प्रेमी, करोति सर्वथा भुवि ॥
महावीरोपरिप्रेमि–लोकानां सर्वसिद्धयः । शीघ्रं भवन्ति सर्वेषां, तत्रकिञ्चिन्न संशयः ॥५६४॥
शूरैरवाप्यते प्रेम, निर्बलैर्नैव लभ्यते । धर्म्यकामस्यभोगोऽपि, शुद्धप्रेम्णालयं व्रजेत् ॥५६५॥
सत्यप्रामाण्यसद्भाव–स्वार्थत्यागपरार्थतः । विशुद्धप्रेमदिव्यात्मा, प्राप्यते भव्यमानवैः ॥
आगतस्वागतं प्रेम्णा, सत्कारात्मनिवेदनम् । प्रणिपातादिकं दिव्यं, जायते भक्तयोगिनाम् ।
अन्तर्यामिप्रभुं साक्षात्, दृष्ट्वा सर्वत्र देहिषु । तेषां पूजाच सत्सेवा, प्रेमभक्तै र्विधीयते ।५६८।
सत्यप्रेमविना लग्नं, कल्पते न द्वयोः कदा । कायलग्नमपि प्रेम, विना न नरयोपिताम् ॥ ५६९ ॥
आर्याणां प्रेमशुद्धत्वं, प्रामाण्यं तद्‍बलाद्भवेत् । आत्मनां गुप्त सज्ज्ञानं, शुद्धप्रेम्णा प्रकाशते ॥
सूर्योदयेन पद्मानां, विकासोऽस्ति यथा भुवि । तथाचित्तविकासस्तु, नृणां प्रेमिसमागमात् ॥
अभेदप्रेमयोगेन, मनुष्याणां परस्परम् । अद्वैतं जायते पूर्णं, सापेक्षं निरपेक्षकम् ॥५७२॥

आन्तरं मानसं प्रेम, तथात्मिकं चिदात्मकम्। कायाद्युपाधिभेदेन, वाह्यं हि चाणिकं स्मृतम् ५७३

अशुभं च शुभं ज्ञेयं, मानसं प्रेम मानवैः। शुभं स्वर्गादि सौख्याय, श्वभ्रायचाशुभं स्मृतम् ॥

आत्मिकं प्रेम मोक्षाय, वाह्यं दुःखाय देहिनाम्। आत्मिकं मानसं वाह्यं, प्रेमसापेक्षबुद्धितः ॥

महावीरस्य जैनानां, परस्परसमागमे। अपूर्वानन्दसंप्राप्ति–र्जायते भक्तियोगतः ॥५७६॥

महावीरोपरिप्रेमि–जैनानां हि परस्परम्। जीविका व्यवहारेण, साहाय्यं सर्वथा भवेत् ॥

शुद्धप्रेमामृतं पूर्णं, सच्चिदानन्दजीवनम्। अहमेव त्वमेवास्मि. मत्त्वद्भेदो न भासते ॥५७८॥

क्रोधक्लेशविनाशेन, मैत्रीभावस्य जीवनम्। सर्वधर्मस्य सन्मूलं, शुद्धप्रेम प्रजायते ॥५७९॥

ज्ञानेनोत्पद्यते प्रेम, निःस्वार्थेन प्रवर्धते। विश्वसेवाफलं शीघ्रं, प्रेमवृक्षस्य जायते ॥ ५८० ॥

प्रेममेघेन सिञ्चन्तु, जीवा विश्वद्रुमावलिम्। प्रेमात्मवायवो वान्तु, विश्वोद्यानेषु सत्त्वरम्।५८१।

विश्वविश्वासयोगेन, स्नानं कुर्वन्तु सज्जनाः। निमज्जन्तु च भावेन,शुद्धप्रेमात्मवारिधौ।५८२।

आत्मपाथोधिरूपस्त्वं,शुद्धप्रेमाऽस्तु जीवनम्। त्वयि मृत्युर्नकस्याऽपि,मृत्युः पुद्गलपर्ययः।५८३।

विश्वं विकासते प्रेम–रसयोगेन सर्वदा। आत्मरूपं जगत् सर्वं, तस्य प्रेमविकासनम् ॥५८४॥

पशुपक्षिगणेष्वेव, वनस्पत्यादिषु स्फुटम् । मानवदेवलोकेषु, प्रेमज्योतिः प्रकाशते ॥ ५८५ ॥
पशुपक्ष्यादिगीतेषु, सत्प्रेमात्मा विलासते । प्रेममाधुर्यसाम्राज्यं, स्वर्गादिशर्मरूपकम् ॥५८६॥
सर्वजीवाधिदेवत्वं, प्रेमविश्वस्य जीवनम् । त्वयि विश्वस्य कर्तृत्वं, भासते त्वत्स्वभावतः ।५८७।
परब्रह्म महावीर ? त्रैलोक्यजीवजीवन ? । शुद्धप्रेमस्वरूपं श्री-जैनधर्मं समर्पय ॥ ५८८ ॥
पूर्णानन्दरसोऽसि त्वं, सर्वजीवान् प्रफुल्लय । शुद्धप्रेमरसाब्धे ? त्वं, शुद्धप्रेम समर्पय ॥५८९॥
शुद्धप्रेम रसाद्वैतं, वर्त्तते जैनशासनम् । एकोऽप्यनेकधारूप-स्त्वमेवैकजगत्प्रभो ? ॥ ५९० ॥
यद्यत् चारित्ररूपं तत्, प्रेमाधारो न विद्यते । नित्यात्मा शुद्धबोधादि-प्रेमाधारो निगद्यते ।५९१।
सदेवात्माऽस्ति विश्वस्य, ज्ञायकश्च प्रशासकः । आत्माभिन्नमसद्द्रव्यं, जडमेवाऽस्ति सर्वथा ।५९२।
सदात्मा प्रेमपाथोधि-रनन्तज्ञानवान्महान् । यत्र प्रेम भवेत्तत्र, रसःसज्ज्योतिषां सदा ॥५९३॥
सत्प्रेमी पूर्णतामेति, पूर्णः पूर्णेन पूर्यते । शुद्धात्मानि सदा सन्ति, पूर्णस्य कारकाणि षट् ।५९४।
प्रेमशब्देन वाच्योऽस्ति, सदात्मा विश्वपर्यवी । शुद्धप्रेमैव शुद्धात्मा, ज्ञानज्ञेयस्वरूपवान् ।५९५।
प्रतिष्ठाया भयं नास्ति, यस्य कीर्त्तेर्भयं तथा । तस्य प्रेमरसावाप्ति-र्भवेत्तत्र न संशयः ॥५९६॥

भयप्रसंगेषु, महावीरस्य जापतः। यस्यात्मा निर्भयो भाति, तस्य प्रेमविशुद्धता ।५९७।
…रं न यस्याऽस्ति, किञ्चिदपि जगत्त्रये। कामादि वासनामुक्तो-वीरः स एव वीर्यवान् ५९८
…आत्मा वीरोऽस्ति लोकानां, सर्वपापाऽपहारकः। अतो जीवाः प्रयत्नेन भवन्तु वीररागिणः५९९
महावीरस्य शरणं, व्रजन्तु सर्वदेहिनः। वीरवीरेति जापेन, जीवन्तु रसयोगतः ॥ ६०० ॥
विचाराचारलालित्यं, शुद्धप्रेमरसात्मकम्। शुद्धप्रेमात्मनां स्वच्छं, जायते वीरजापतः॥६०१॥
साकारो देहयोगेन, निराकारः स्वरूपतः। महावीरो हृदि ध्येयः, शुद्धप्रेममयैर्जनैः ॥ ६०२ ॥
निराकारादपि श्रेष्ठो–वीरः साकाररूपवान्। प्रभोः साकाररूपेण, विश्वोद्धारो भवेद्द्रयात् ।६०३।
पूर्णानन्तोपकारस्तु, देशनाद्यैर्भवेद्यतः। अतः साकारवीरस्य, श्रेयस्ता चोपकारता ॥६०४॥
आकारः पुद्गलैर्योगात्, सतु प्रकृतिरुच्यते। प्रकृतिमन्तरा कोऽपि, नास्ति विश्वोपकारकः
प्रकृतिमन्तरा कोऽपि, प्रकृत्या न विमुच्यते। परस्परोपकारस्तु,साकारात् सर्वदेहिनाम् ।६०६।
अतोऽनन्तगुणश्रेष्ठो-वीरः साकाररूपवान्। गेयः पूज्यः सदाध्येयः,प्रेमिभिरात्मरूपकः॥६०७॥
निराकारो महावीरः पूर्णशुद्धोपयोगिभिः। देहस्य आन्तरः पूर्णः, प्राप्यते व्यापको महान् ।६०८

अन्तरात्ममहावीर-साकारस्य कलौ सदा। जापः स्मृतिश्च सत्पूजा, कर्तव्या प्रेमतानतः ॥६०६।
सर्वजीवैः सहाऽभेद्-आत्मनः सर्वथा यदा। तदा स्वयं महावीरो-भक्त्यात्मा जायते खलु॥६१०।
भावेषु विद्यते वीरो-नाभावेषु कदाचन। आत्मभावानुसारेण, भवेद् वीरः फलप्रदः ॥६११॥
महावीरोपरिप्रेमि-लोकानां सर्वसंपदः। जायन्ते पुत्रपौत्राद्या-स्तत्र किञ्चिन्न संशयः ॥६१२॥
महावीरोपरिप्रेमि-लोकानां पूर्णभक्तितः। विद्यासत्तादितः पूर्णा, समुत्क्रान्तिर्भवेत्सदा ॥६१३॥
महावीरोपरि प्रेम, यस्य पूर्णं भवेत् खलु। तस्योपरि महावीर-कृपा पूर्णा सदा भवेत् ॥६१४॥
महावीरोपरिप्रेम-जैनानां पशुपक्षिषु। समाजे च भवेत्सेवा, वित्तादिस्वार्पणात् सदा ॥६१५॥
जैनानामुपरिव्यक्त-प्रेमिजैना भवन्ति ये। महावीरपदं यान्ति, परस्परसहायतः ॥६१६॥
उद्धारो नास्ति विश्वस्य, जैनधर्माश्रयं विना। महावीरसदाज्ञेवं, प्रेम्णा सर्वत्र गर्जति ॥६१७॥
महावीरोपरि प्रेमि-जैनाः शौर्यादि संयुताः। प्राणादि सर्वनाशेऽपि, भ्रष्टा भवन्ति नो कदा ६१८
न्य धर्मोपदेशेऽपि, मिथ्यागुरुसमागमात्। महावीरस्य विश्वासात्, चलन्ति कर्हिचिन्न ते ॥
महावीरस्य सत्प्रेमा, कन्यावित्तादिलोभतः। तथान्यरागयोगेन, न जैनेन्द्रं गुरुं त्यजेत् ॥६२०॥

वनाप्रेमसामर्थ्यं, बीजरूपं प्रबोध्यते । सर्वसेवाप्रवृत्त्या तु, फलरूपं प्रजायते ॥ ६२१ ॥
वार्तारूपं तु यत्प्रेम, तत्तुभावस्य कारणम् । भावनाप्रेमपाकेन, कार्यं प्रेम प्रजायते ॥६२२॥
सर्वकर्तव्यकार्येषु, यस्य प्रेम भवेद् दृढम् । तस्य कार्यस्वरूपेण, सत्यप्रेम निगद्यते ॥ ६२३ ॥
अधिकारोऽस्ति कार्येषु, दिव्यप्रेमात्मनां सदा । कामस्वार्थादियुक्तानां, तत्रास्ति नैव योग्यता ॥
दिव्यप्रेमी भवेज्जैनो—धर्म्यलक्षादिकर्मठः । आत्मनां पूजकः पूर्णो—जडस्य न च पूजकः ॥६२५॥
आत्मानमन्तरा कोऽपि, प्रेमरूपो न बोध्यते । ज्ञानिना ज्ञानयोगेन, ज्ञायते सर्वदा खलु ॥६२६॥
पिण्डब्रह्मांडकार्येषु, दिव्यप्रेम विलोकते । आत्मभावेन दिव्यात्मा, यत्र तत्र यदा तदा ॥६२७॥
खण्डनं मण्डनं नैव, न च तर्कविवादता । शुद्धप्रेमणि भक्तानां, दृश्यो वीरो जिनेश्वरः ॥६२८॥
परब्रह्म महावीर—एकएव महाप्रभुः । प्रेमिणां सर्वथाऽऽधारः, कलौ प्रेम्णैव तारकः ॥६२९॥
सर्वं विश्वमयं वीरं, जानाति तस्य वीरता । वीरस्य प्रेममात्रेण, कलौ मोक्षोऽस्ति देहिनाम् ॥
परब्रह्म महावीरे, प्रेमधारणमात्रतः । कृत्स्नकर्मक्षयो मोक्षो—भवेत् तत्र न संशयः ॥ ६३१ ॥
सम्यक्त्वस्य रुचिः प्रेम, भाषितं तीर्थनायकैः । कलौ वीरस्य प्रेम्णैव, निष्कर्मो जायते जनः ॥

महावीरस्य भक्तानां, नराणां योषितां शिवम्। भवत्येवकलौ प्रान्ते, तत्र किञ्चिन्न संशयः ॥
महावीरस्य वृत्तान्त–गीतस्तुत्यादिभिर्जनैः। कर्तव्या नवधा भक्ति–र्निश्चयव्यवहारतः ६३४
महावीरप्रभुः सेव्य,–एकएव सनातनः। महापापात्मनां मुक्तिं, ददात्येव स्वभावतः ॥६३५॥
आत्मानः श्रीमहावीराः, सर्वेषां सत्तया सदा। शुद्धात्मप्रेमतस्तेस्यु–र्व्यक्तितः परमेश्वराः ॥
महावीरोपरिप्रेम–कारिणां भक्तदेहिनाम्। नैव विघ्नादि संपातो–भवत्येव सुभक्तितः ॥६३७॥
महावीरस्य नामादि–प्रेमिणां भक्तदेहिनाम्। अति शीघ्रतया मुक्ति–र्जायते नान्यथा कदा ॥
प्रेमामृतमयं विश्वं, दृश्यते प्रेमदृष्टितः। प्रेमज्योतिर्मयं विश्वं, प्रेमदृष्ट्या विलोक्यते ॥ ६३९ ॥
जैनधर्मे रुचिर्यस्य, तस्मै किं रोचतेऽपरम्! तृषितः स्वर्णदीतीरे, कूपं वाञ्छति कः सुधीः? ॥६४०॥
यस्यजैनोपरिप्रेम, जैनधर्मे च सर्वथा। वर्त्तते स्वात्मभोगेन, तस्य मुक्तिर्न संशयः ॥ ६४१ ॥
वीरभक्तिर्जनैः साध्या, सर्वकल्याणकोत्सवैः। महावीरचरित्रस्य, श्रवणात् प्रेमवान् भवेत् ॥
परब्रह्म महावीरः, सर्वज्ञपरमेश्वरः। तस्मिन् विश्वासयोगेन, शुद्धप्रेम प्रजायते ॥ ६४३ ॥
सर्वद्रव्यजगच्छ्रेष्ठ–कर्ता हर्ता प्रभुः स्वयम्। वीरो यस्य हृदि व्यक्तः, शुद्धप्रेमी स उच्यते ॥

देवप्रेम गुरोः प्रेम, धर्मप्रेम च मुक्तिदम् । विज्ञायेति महावीर–भक्तो याति परंपदम् ॥६४५॥
सर्वात्मानो महावीराः, संग्रहसत्तया स्फुटम् । तेषामुपरि सत्प्रेम, सेवा मोक्षाय देहिनाम् ।६४६।
प्रतिघस्त्रं महावीर–मूर्तिपूजाविधायकः । गुरोः पूजाविधाता च, भक्तो मोक्षाय कल्पते ॥६४७॥
व्यापकप्रेमसद्भक्त्या, सर्वविश्वस्य देहिनाम् । उपकाराय जीवेद्यो–वीरभक्तः स सर्वथा ॥६४८॥
प्रेमयोगं समाश्रित्य, अनन्ताः परमं पदम् । याता यान्ति च यास्यन्ति, जीवा आन्तरजीवनाः ॥
असंख्यदृष्टिभिर्मोक्षो–महावीरेण दर्शितः । तत्र सत्प्रेमतोमुक्ति–र्जायते सर्वदेहिनाम् ॥६५०॥
कलौ तु प्रेमयोगेण, मुक्तिमार्गः प्रवर्त्स्यते । सर्वभव्यात्मनां शान्ति-दायकः पापरोधकः ।६५१
मिथ्यायुक्तिशतेनाऽपि, जैनधर्मान्न यश्चलेत् । जैनधर्मः स विज्ञेयः, सत्यप्रेमा स्थिराशयः।६५२
परब्रह्म महावीरं, विना देवो न विद्यते । इत्येवं निश्चयो यस्य, तस्यैव भक्तियोग्यता ॥६५३॥
संप्रति विद्यमानाना-मागमानां तथा कलौ । सूरिवाचकसाधूनां श्रद्धया प्रेमपात्रता ॥६५४॥
वीरभक्तस्य गांभीर्यं, पूर्णसागरवद् भवेत् । चाल्यते नैव देवेन्द्रै–र्देहादिनाशतः कदा ॥६५५॥
महावीरस्य सत्प्रेम, भक्तानां शरणं सदा । सर्वधर्मान् परित्यज्य, वीरस्य शरणं व्रज ॥६५६॥

प्राणान्तेऽपि न मुञ्चन्ति-महावीरं च सद्गुरुम्। जैनधर्मं न मुञ्चन्ति, लोकास्ते प्रेमयोगिनः॥६५७
चित्तेन क्रियते यद्यत्, क्रियते यच्चवाचया। देहेन क्रियते तत्स्यात्, वीरस्य प्रेमपूजनम्।६५८।
महावीरमयं चित्तं, महावीरमयं वचः। महावीरमयो देहो-भूयान्मे सर्वथा सदा ॥ ६५६ ॥
कृतं करोमि यत्सर्वं, करिष्यामि च भावतः। तत्सर्वं प्रेमयोगेन, भूयाद् वीरार्पणं सदा ॥६६०॥
विश्वं प्रेममयं भूयात्, तथा श्रीजैनशासनम्। सर्वसंघस्य मांगल्यं, भूयात्सर्वत्र सर्वदा ॥६६१॥
श्रीमहावीरगीतायां, भक्तियोगः प्रदर्शितः। तत्र सत्प्रेमतो मुक्ति-र्महावीरेण दर्शिता ॥६६२॥
मया तदनुसारेण प्रेमगीता प्रदर्शिता। महावीरप्रभोः पत्नी, यशोदा प्रेमरूपिणी ॥ ६६३ ॥
गृहादर्शस्तु लोकाना-मादेयो द्रव्यभावतः। महावीरस्य मे भूयात्, तथा प्रेमप्रवर्धकः ॥६६४॥
त्यागादर्शमहावीरः, त्यागिनां मोक्षहेतवे। भूयात् सत्प्रेमयुक्तानां, सर्वकल्याणकारकः ॥६६५॥
त्यागादर्शे महावीरे, गौतमस्वामिनश्च मे। शुद्धप्रेमास्तु लोकानां, सात्त्विकं शरणं महद् ।६६६।
जैनानां जैनशास्त्राणां, सद्गुरूणां विशेषतः। सत्प्रेम पूर्णमोक्षाय, जायते पञ्चमाऽरके।६६७।
तपोभिः संयमैर्जापैः, किं फलं जायते कलौ। महावीरप्रभुप्रेम्णा, मोक्षो भवति देहिनाम्।

ॐ तत्सत् परम प्रेमिन् ! महावीर महा प्रभो !। सर्वविश्वोपकाराय, भवतु त्वत्पदाम्बुजम् । ६६९
शमस्तु सर्वलोकानां, जैनशासनरागिणाम् । कलौ प्रेममयं जैन-शासनं जयतात्सदा ।६७०।
परंपराप्रवाहेण, प्रेमगीता प्रवर्त्तिता । उद्धृता भक्तियोगेन, यशोभद्रेण सूरिणा ॥ ६७१ ॥
परंपरोद्धृता भूयात्, सर्वत्र पञ्चमाऽरके। भक्तियोगस्य सद्बोध-दायिनी मुक्तिवाहिनी ।६७२।
गृहत्यागदशापूर्ण-महावीरयशोदयोः। निष्कामप्रेमयोगोऽस्तु, लोकानां शरणं सदा । ६७३ ।
नेत्र द्वीप रस क्षोणी-[१९७२] प्रमिते वैक्रमे शुभे । वत्सरे श्रावणे शुक्ल-पञ्चम्यां भृगुवासरे।६७४।
विद्यापुरीयसंघेन, प्रार्थितेन महर्षिणा । चतुर्मासस्थितिं तत्र-विधाय सुसमाधिना ॥ ६७५ ॥
प्रेमगीता सुगीतेयं, बुद्धिसागर सूरिणा। लोकत्रयी पठित्वेमां, नन्दतात्सुचिरं भुवि ॥६७६।
यावद्भूमण्डलं धत्ते, यावच्चन्द्रदिवाकरौ। तावदुल्लासतामेतु, प्रेमगीतेयमुत्कटा ॥ ६७७ ॥
अध्यात्मरसनिर्भिन्ना, प्रेमगीतेयमद्भुता। प्रेमिणां प्रेमतो देया, यादृक्तादृक् जनस्य नो ।६७८
छद्मस्थत्वात्प्रमादाद्वा, काऽपि दोषस्य संगतिः। दृश्यते मतिमद्भिश्चेत्-क्षन्तव्यं कृपया मयि ॥
मङ्गलं भगवान् वीरो-मङ्गलं गौतमप्रभुः। नैगमाद्यैर्नयैः सर्वै—जैनधर्मोऽस्तु मङ्गलम् ॥६८०॥

प्राणान्तेऽपि न मुञ्चन्ति-महावीरं च सद्गुरुम्। जैनधर्मं न मुञ्चन्ति, लोकास्ते प्रेमयोगिनः॥६५७
चित्तेन क्रियते यद्यत्, क्रियते यच्च वाचया। देहेन क्रियते तत्स्यात्, वीरस्य प्रेमपूजनम्॥६५८॥
महावीरमयं चित्तं, महावीरमयं वचः। महावीरमयो देहो-भूयान्मे सर्वथा सदा ॥ ६५९ ॥
कृतं करोमि यत्सर्वं, करिष्यामि च भावतः। तत्सर्वं प्रेमयोगेन, भूयाद् वीरार्पणं सदा॥६६०॥
विश्वं प्रेममयं भूयात्, तथा श्रीजैनशासनम्। सर्वसंघस्य मांगल्यं, भूयात्सर्वत्र सर्वदा॥६६१॥
श्रीमहावीरगीतायां, भक्तियोगः प्रदर्शितः। तत्र सत्प्रेमतो मुक्ति-र्महावीरेण दर्शिता ॥६६२॥
मया तदनुसारेण प्रेमगीता प्रदर्शिता। महावीरप्रभोः पत्नी, यशोदा प्रेमरूपिणी ॥ ६६३ ॥
गृहादर्शस्तु लोकाना-मादेयो द्रव्यभावतः। महावीरस्य मे भूयात्, तथा प्रेमप्रवर्धकः ॥६६४॥
त्यागादर्शमहावीरः, त्यागिनां मोक्षहेतवे। भूयात् सत्प्रेमयुक्तानां, सर्वकल्याणकारकः॥६६५॥
त्यागादर्शे महावीरे, गौतमस्वामिनश्च मे। शुद्धप्रेमास्तु लोकानां, सात्त्विकं शरणं मम॥६६६॥
जैनानां जैनशास्त्राणां, सद्गुरूणां विशेषतः। सत्प्रेम पुंसां मोक्षाय, जायते पञ्चमाऽरके॥६६७॥
तपोभिः संयमैर्जापैः, किं फलं जायते कलौ। महावीरप्रभुप्रेम्णा, मोक्षो भवति देहिनाम्॥६६८

ॐ तत्सत् परम प्रेमिन् ! महावीर महा प्रभो ! । सर्वविश्वोपकाराय, भवतु त्वत्पदाम्बुजम् । ६६९
शमस्तु सर्वलोकानां, जैनशासनरागिणाम् । कलौ प्रेममयं जैन-शासनं जयतात्सदा ।६७०।
परंपराप्रवाहेण, प्रेमगीता प्रवर्त्तिता । उद्धृता भक्तियोगेन, यशोभद्रेण सूरिणा ॥ ६७१ ॥
परंपरोद्धृता भूयात्, सर्वत्र पञ्चमाऽरके । भक्तियोगस्य सद्बोध-दायिनी मुक्तिवाहिनी ।६७२।
गृहत्यागदशापूर्ण-महावीरयशोदयोः । निष्कामप्रेमयोगोऽस्तु, लोकानां शरणं सदा । ६७३ ।
नेत्र द्वीप रस क्षोणी-[१९७२] प्रमिते वैक्रमे शुभे । वत्सरे श्रावणे शुक्ल-पञ्चम्यां भृगुवासरे।६७४।
विद्यापुरीयसंघेन, प्रार्थितेन महर्षिणा । चतुर्मासस्थितिं तत्र-विधाय सुसमाधिना ॥ ६७५ ॥
प्रेमगीता सुगीतेयं, बुद्धिसागर सूरिणा । लोकत्रयी पठित्वेमां, नन्दतात्सुचिरं भुवि ॥६७६।
यावत्कूर्मण्डलं धत्ते, यावच्चन्द्रदिवाकरौ । तावदुल्लासतामेतु, प्रेमगीतेयमुत्कटा ॥ ६७७ ॥
अध्यात्मरसनिर्भिन्ना, प्रेमगीतेयमद्भुता । प्रेमिणां प्रेमतो देया, यादृक्तादृक् जनस्य नो ।६७८
छद्मस्थत्वात्प्रमादाद्वा, क्वाऽपि दोषस्य संगतिः । दृश्यते मातिमद्भिश्चेत्-क्षन्तव्यं कृपया मयि ॥
मङ्गलं भगवान् वीरो-मङ्गलं गौतमप्रभुः । नैगमाद्यैर्नयैः सर्वै-जैनधर्मोऽस्तु मङ्गलम् ॥६८०॥

सर्वमङ्गलमाङ्गल्यं, सर्वकल्याणकारणम्। प्रधानं सर्वधर्माणां, जैनं जयतु शासनम् ॥ ६८१ ॥

इति श्रीस्वपरसमयपारावारपारीणजैनतत्त्वमहोदधिशास्त्रविशारदयोगनिष्ठाध्यात्मज्ञान-
दिवाकरजैनाचार्यश्रीमद् बुद्धिसागरसूरीश्वरविरचिता श्रीप्रेमगीता-

समाप्ता.

